( ततः प्रविशति सोत्कण्ठो राजा । )

राजा—

क्षामां मङ्गलमात्रमण्डनभृतं मन्दोद्यमालापिनी-
माापाण्डुच्छविना मुखेन विजितप्रातस्तनेन्दुद्युतिम् ।
सोत्कण्ठां नियमोपवासविधिना चेतो ममोत्कण्ठते
तां द्रष्टुं प्रथमानुरागजनितावस्थामिवाद्य प्रियाम् ॥१॥

विदूषकः—( उपसृत्य । ) स्वस्ति भवते । वर्धतां भगवान् । (सोत्थि होदे । वड्ढदु भवं । )

राजा—( विलोक्य । ) वसन्तक । कस्मात्प्रहृष्ट इव लक्ष्यसे ।

विदूषकः—अर्चति खलु देवी ब्राह्मणम् । ( अच्चदिक्खु देवी बह्मणं । )

राजा—यद्येवं ततः किम् ।

विदूषकः—( सगर्वम् । ) भोः । ईदृशः खलु ब्राह्मणः । यश्च-तुर्वेदपञ्चवेदषड्वेदब्राह्मणसहस्रपर्याकुले राजकुले प्रथममहमेव देवीसकाशा-त्स्वस्तिवायनं लभे । ( भो । ईरिसो क्खु बह्मणो । जो चउव्वेदपञ्चवेदछवेद-बम्हणसहस्सपज्जाउले राअउले पुढमं अहं एव्व देवीसआसादो सोत्थिआअणं लहेमि । )

राजा—( विहस्य । ) वेदसंख्ययैवावेदितं ब्राह्मण्यम् । तदागच्छ महाब्राह्मण । धारागृहोद्यानमेव गच्छावः ।

विदूषकः—यद्देव आज्ञापयति । ( जं देवो आणवेदि । )

राजा—गच्छाग्रतः ।

---

क्षामामिति । नियमार्थं व्रतार्थमुपवासः तस्य विधिरनुष्ठानं तेन हेतुना क्षामां कृशाम् । मङ्गलानि कण्ठसूत्रनासामणिताटङ्कादीन्येव मङ्गलमात्राणि मण्डनानि बिभर्तीति ताम् । मन्दं यथा तथा उद्यमेन प्रयत्नेनालपतीति तथा ताम् । आपाण्डुः छविः कान्तिर्यस्य तेनापाण्डुना मुखेन विजिता प्रातस्तनस्येन्दोर्द्युतिर्यया ताम् । सोत्कण्ठां च । अत एव प्रथमानुरागेण जनिता अवस्था कृशत्वादिलक्षणा यस्यास्तामिव तां तथानुरा-गिणीं प्रियामद्य द्रष्टुं मम चेतः उत्कण्ठते उत्सुकं भवति । उपमास्वभावोक्त्योः संसृष्टि-रलंकारः । शार्दूलविक्रीडितं वृत्तम् ॥ १ ॥ चत्वारो वेदा येषां ते चतुर्वेदाः । एव-मन्यत्र । पञ्चवेदेत्यादि परिहासार्थमुक्तिः । महाब्राह्मणेति उपहासार्थम् । अत्र महच्छब्दो निन्दापरः । तदुक्तं—शंखे तैले तथा मांसे वैद्ये ज्यौतिषिके द्विजे । यात्रायां पथि निद्रायां महच्छब्दो न दीयते ॥ इति ।

---

१ मन्दोद्यता॰. २ प्रचया॰. ३ प्रथममेव लभते. ४ वाचनं. ५ धाराधरो.

**विदूषकः**—भो एहि गच्छावः । ( परिक्रम्यावलोक्य च । ) भो वयस्य पश्य पश्य । अविरतपतद्विविधकुसुमसुकुमारशिलातलोत्सङ्गस्य परिमलनिलीनमधुकरभरभग्नबकुलमालतीलताजालकस्य कमलगन्धग्रहणोद्दाममारुतपर्यस्तबुद्धबन्धूकबन्धनस्याविरलतमालतरुपिहितातपप्रकाशस्यास्य धारागृहोद्यानस्य सश्रीकताम् । ( भो एहि गच्छह्म । भो वअस्स पेक्ख पेक्ख । अविरदपडन्तविविहकुसुमसुउमालसिलाअलुच्छङ्गस्स परिमलणिलीणमहुअरभरभग्ग[illegible]जालअस्स कमलगन्धगहणुद्दाम[illegible]णस्स अविरलतमालतरुपि[illegible]अस्स धारापरमाणस्स सस्सरीअं । )

**राजा**—वयस्य साध्वभिहितम् । अत्र हि ।

वृन्तैः क्षुद्रप्रवालस्थगितमिव तलं भाति शेफालिकानां
गन्धः सप्तच्छदानां सपदि गजमदामोदमोहं करोति ।
एते चोन्निद्रपद्मच्युतबहलरजःपुञ्जपिङ्गाङ्गरागा
गायन्त्यव्यक्तवाचः किमपि मधुलिहो वारुणीपानमत्ताः ॥२॥

**विदूषकः**—भो वयस्य एतदपि तावत्पश्य पश्य । य एषोऽविरलपतत्कुसुमनिकरोऽद्यापि पत्रान्तरगलद्वर्षावसानसलिलबिन्दुरिव लक्ष्यते

---

अविरलं यथा तथा पतन्ति यानि विविधानि कुसुमानि तैः सुकुमारः मृदुस्पर्शः मनोहरो वा शिलातलस्य उत्सङ्गो मध्यप्रदेशो यत्र तत् तस्य । परिमलेन निलीनाश्च ते मधुकराश्च तेषां भरेण भग्नानि बकुलानां मालतीलतानां जातिलतानां जालकानि पुष्पगुच्छा यस्मिंस्तस्य । कमलानां गन्धस्य ग्रहणेन उद्दामा उत्कटो यो मारुतस्तेन पर्यस्तबुद्धानि विकसितानि बन्धूकानां बन्धूककुसुमानां बन्धनानि वृन्तानि यस्मिन् तस्य । अविरलाश्च ते तमालतरवश्च तैः पिहितो निवारित आतपप्रकाशः सूर्यालोको यस्मिन् तस्य । **वयस्य**—वयसा तुल्यः वयस्यः । 'नौवयोधर्म' इति यत् । **वृन्तैरिति** । शेफालिकानां निर्गुण्डीकुसुमानां वृन्तैः बन्धनैः तलं भूमितलं क्षुद्रैः प्रवालैः अल्पैर्विद्रुमखण्डैः स्थगितमावृतमिव भाति । सप्तच्छदानां गन्धः सपदि तत्क्षणं गजमदस्य य आमोदः परिमलस्तस्य मोहं भ्रान्तिं तनोति जनयति । उन्निद्रेभ्यो विकसितेभ्यः पद्मेभ्यः च्युतः बहलः रजःपुञ्जः तेन पिङ्गः पीतवर्णः अङ्गरागः अङ्गवर्णो येषां ते । बहलरजःपुञ्ज एव पीताङ्गरागो येषामिति वा । वारुणीपानेन पुष्परसमधुपानेन मत्ता अत एव अव्यक्तवाचः एते मधुलिहो मधुकराश्च किमपि गायन्ति । उत्प्रेक्षाभ्रान्तिमत्स्वभावोक्तीनां संसृष्टिः । स्रग्धरा वृत्तम् ॥ २ ॥ **अविरलेति** । अविरलं निरन्तरं यथा तथा पतन्कुसुमनिकरो यस्य सः । अद्यापि पत्रान्तरेभ्यो गलन्तः वर्षावसानसलिलबिन्दवो यस्य स इव लक्ष्यते । तं पश्येति सम्बन्धः ।

---

१ बहलो ( बहलुद्दा० ). २ प्रतिबुद्ध ( पडिबु० ). ३ बहुल ४ काणपिङ्गा. ५ शेषप्रवाल ( सिअरो अगप ). ६ वसानसमयसलि० ( वसाणसमअ० ).

सप्तपर्णपादपः । ( भो वअस्स । एद पि दाव पेक्ख पेक्ख । जो एसो अविरलपडन्त-कुसुमणिअरो अअ वि पसन्तरगळन्तवरिसावसाणसलिलबिन्दू विअ लक्खीअदि सत्तवण्णपाअवो । )

**राजा**—वयस्य सम्यगुत्प्रेक्षितम्। बहेव सदृशं जलदसमयस्य। तथाहि।

**विश्राणा मृदुतां शिरीषकुसुमश्रीहारिभिः शाद्वलैः**
**—कल्पितकुट्टिमा मरकतक्षोदैरिव क्षालितैः।**
**एषा संप्रति बन्धनाद्विगलितैर्बन्धूकपुष्पोत्करै-**
**रद्यापि क्षितिरिन्द्रगोपकशतैश्छन्नेव संलक्ष्यते ॥ २ ॥**

( ततः प्रविशति चेटी । )

**चेटी**—आज्ञप्तास्मि देव्या वासवदत्तया। हञ्जे इन्दीवरिके अद्य मयागस्त्यमहर्षयेऽर्घो दातव्यः। तद्गच्छ त्वम्। शेफालिकाकुसुममालां लघु गृहीत्वागच्छेति। एषाप्यारण्यिका धारागृहोद्यानदीर्घिकाया यावदेव विकसितानि कमलानि नास्ताभिलाषिणा सूर्येण मुकुलाय्यन्ते तावदेव लब्धवचित्यागच्छत्विति। एषा तपस्विनी तां दीर्घिकां न जानाति। तद्गृहीत्वा तां गमिष्यामि। ( नेपथ्याभिमुखमवलोक्य। ) इत इत आरण्यिके एहि। ( आणत्तम्हि देवीए वासवदत्ताए। हञ्जे इन्दीवरिए। अज्ज मए अगत्थिमहेसिणो अग्घो दादव्वो। ता गच्छ तुम। सेहालिआकुसुममालं लहु गेण्हिअ आअच्छेत्ति। एसावि आरण्णिआ धाराघरुज्जाणदीहिआए जाव एव्व विआसिआईं कमलाइं ण अत्थाहिला-

---

**विश्राणेति**। शिरीषकुसुमानां श्रियं शोभां हरन्तीति तैः शाद्वलैः शादहरितप्रदेशैः मृदुतां कोमलतां विश्राणा। क्षालितैः निर्मृष्टैः मरकतक्षोदैः मरकतखण्डैः सद्यस्तत्क्षणं कल्पित-कुट्टिमा इव स्थिता। एषा भूमिः संप्रति बन्धनाद्विगलितैः बन्धूकपुष्पाणामुत्करैः पुञ्जैः अद्यापि इन्द्रगोपकशतैः छन्ना इव लक्ष्यते। शार्दूलविक्रीडितं वृत्तम् ॥ २ ॥ हञ्जे इति चेटीं प्रति सम्बोधनम्। 'हण्डे हञ्जे हलाह्वाने नीचां चेटीं सखीं प्रति'। इत्यमरः। अगस्त्य महर्षये। अत्र—अप्राप्ते भास्करे कन्यां शेषभूतैस्त्रिभिर्दिनैः। अर्घ्यं दद्युरगस्त्याय गौडदेश-निवासिनः ॥ इति ब्रह्मवैवर्ते। भीमपराक्रमेऽपि—यस्तु भाद्रपदस्यान्त उदिते कलशोद्भवे। अर्घ्यं दद्यादगस्त्याय सर्वान्कामाँल्लभेत सः ॥ इति। पद्यद्वयमुद्धृतं श्रीकृष्णसूरिभिः। अरण्ये भवा आरण्यिका। 'अरण्यान्मनुष्ये' इत्यनेनारण्यशब्दाद्वुञ्। 'प्रत्ययस्थात्कात्'• इति इत्वम्। मुकुलाय्यन्ते मुकुलवदाचरन्ति मुकुलायन्ते तथा क्रियन्ते। सङ्कुच्यन्ते इत्यर्थः।

---

१ सम्यगुपलक्षितं वयस्येन। अत्र हि बहेव २ अर्घं दातव्यम् ३ पुष्पाणि ल•. ४ याव-देव अस्ताः सूर्येण न मुकुलयन्ते कमलानि ( जाव एव्व अत्था• णमुउलाविअन्ति कमलाइं ) तावदेवावचित्य. ५ मप. आरण्यि ६ इत एहि आ

सिणा सुज्जेण मउलाविज्जन्ति ताव एव्व लहुअं अवचिणुअ आअच्छदुत्ति । एसा तव-स्सिणी तं दीहिअं ण जाणादि । ता गेण्हिअ तं गमिस्सं । इदो इदो आरण्णिए एहि ।)

( ततः प्रविशत्यारण्यिका । )

**आरण्यिका**—( सबाष्पोद्वेगमात्मगतम् । ) तथा नाम तादृशे वंश उत्पन्न-यान्यजनमाज्ञाप्य स्थितया सांप्रतं परस्य मयाज्ञप्तिः कर्तव्येति नास्ति खलु दुष्करं देवस्य । अथवा ममैवैष दोषो येन जानत्यापि न व्यापादित आत्मा । तत्किं सांप्रतं करिष्यामि । अथवा दुष्करमिदानीं मया चिन्तितम् । वरमेवैतदपि । न पुनरात्मनो महार्घं वंशं प्रकाशयन्त्या मया लघूकृत आत्मा । तत्का गतिः । यथाभणितमनुष्ठास्यामि । ( तह णाम तारिसे वंसे उप्पण्णाए अण्णजणं आणाविअ ठ्ठिदाए संपदं परस्स मए आणत्ती कादव्वेत्ति णत्थि खु दुक्करं देव्वस्स । अहवा मह एव्व एसो दोसो जेण जाणन्तीए वि ण वावादिओ अप्पा । ता किं संपदं करिस्सं । अहवा दुक्करं दाणिं मए चिन्तिदं । वरं एव्व एदं वि । ण उण अप्पणो महग्घं वंसं पआसअन्तीए मए लहुकिदो अप्पा । ता का गई । जहभणिदं अणुचिट्ठिस्सं । )

**चेटी**—इत एह्यारण्यिके । ( इदो एहि आरण्णिए । )

**आर०**—इयमागच्छामि । ( श्रमं नाटयन्ती । ) हञ्जे दूरे किमद्यापि दीर्घिका । ( इअं आअच्छामि । हञ्जे दूरे किं अज्जवि दिग्घिआ । )

**चेटी**—एषा शेफालिकागुल्मान्तरिता । तदेहि अवतरावः । ( अवतरणं नाटयतः । ) ( एसा सेहालिआगुम्मन्तरिआ । ता एहि ओदरम्ह । )

**राजा**—वयस्य किमन्यदिव चिन्तयसि । ननु ब्रवीमि महेव सदृशं शरत्समयस्येति । ( विश्राणा मृदुतामित्यादि पुनः पठति । )

**विदूषकः**—( सक्रोधम् । ) भोः त्वं तावदेतदन्यच्च पश्यन्नुत्कण्ठा-निर्भरं विनोदयस्यात्मानम् । मम पुनर्ब्राह्मणस्य स्वस्तिवाचनवेलातिक्रामति । तद्यावदहं त्वरितं दीर्घिकायां स्नात्वा देव्योः सकाशं गमिष्यामि । ( भो तुमं दाव एदं अण्णं अ पेक्खन्तो उक्कण्ठाणिब्भरं विणोदेसि अप्पाणं । मम उण बह्म-णस्स सोत्थिवाअणवेला अदिक्कमदि । ता जाव अहं तुवरिअ दीहिआए ण्हाइअ देवीए सआसं गमिस्सं । )

---

तादृशे मुख्यरीत्या । वरं मनाक्प्रियम् । महार्घमुदारम् । लघूकृतः लघुतां नीतः । गुल्मः स्तम्बः ।

---

१ सबाष्पमात्म०. २ उत्पन्ना दासजनमा० सांप्रतं ( उप्पण्णा दासजण आणाविअ संपदं ). ३ पंग्निहासि- ४ देवीसकाशं.

**राजा**—ननु मूर्ख पारंगता एव वयं दीर्घिकायाः । एवमने-केन्द्रियसुखातिशयमनुभवन्नपि नोपलक्षयसि । पश्य ।

श्रोत्रं हंसस्वनोऽयं सुखयति दयितानूपुरह्लादकारी
दृष्टिप्रीतिं विधत्ते तटतरुविवरालक्षिता सौधपाली ।
गन्धेनाम्भोरुहाणां परिमलपटुना जायते घ्राणसौख्यं
गात्राणां ह्लादमेते विदधति मरुतो वारिसंपर्कशीताः ॥ ४ ॥

तदेहि दीर्घिकातटमुपसर्पावः । ( परिक्रम्यावलोक्य च । ) वयस्य पश्य पश्य ।

उद्यानदेवताया स्फुटपङ्कजकान्तिहारिणी स्वच्छा ।
दृष्टिरिव दीर्घिकेयं रमयति मां दर्शनेनैव ॥ ५ ॥

**विदूषकः**—( सकौतुकम् । ) भो वयस्य पश्य पश्य । कैषा कुसुमपरिमलसुगन्धवेणिमधुकरावलिर्विद्रुमलतारुणहस्तपल्लवा उज्ज्वलतनुकोमलबाहुलता सत्यं प्रत्यक्षचारीवोद्यानदेवता स्त्री दृश्यते । ( भो वअस्स पेक्ख पेक्ख । का एसा कुसुमपरिमलसुअन्धवेणीमहुअरावली विद्दुमलआरुणहत्थपल्लवा उज्जलतणुकोमलबाहुलदा सच्चं पच्चक्खचारी विअ उज्जाणदेवदा इत्थिआ दीसइ । )

**राजा**—( सकौतुकं विलोक्य । ) वयस्य निरतिशयस्वरूपशोभाजनितबहुविकल्पेयम् । यत्सत्यमहमपि नावगच्छामि । पश्य ।

---

पारंगताः तीरं प्राप्ताः । अनेकानि च तानि इन्द्रियाणि तेषां सुखातिशयमतिशयितसुखमित्यर्थः । तदेव दर्शयति—**श्रोत्रमिति** । दयितायाः प्रेयस्या नूपुरस्येव ह्लादं शब्दं करोतीति तथा । दयितामञ्जीरशिञ्जितसदृश इत्यर्थः । अयं हंसस्वनः श्रोत्रं कर्णौ इत्यर्थः । सुखयति । तटतरूणां विवरेभ्यो लक्षिता दृष्टा सौधपाली तदवस्थिताट्टपङ्क्तिः दृष्टेः नयनयोः प्रीतिं मुदं विधत्ते । अम्भोरुहाणां परिमलेन पटुना स्फुटेन गन्धेन सौरभ्येण घ्राणस्य सौख्यं जायते । एते वारिसंपर्केण शीताः मरुतो वायवः गात्राणां ह्लादं विदधति च । स्वभावोक्तिः । स्रग्धरा छन्दः ॥ ४ ॥ **उद्यानेति** । स्फुटानां विकसितानां पङ्कजानां कमलानां कान्त्या हरतीति हारिणी मनोहरा । दृष्टिपक्षे कान्तिवत् हारिणी । स्वच्छा उद्यानदेवताया दृष्टिः इव इयं दीर्घिका मां दर्शनेनैव रमयति । श्लिष्टोपमालङ्कारः । आर्योपगीतिः ॥ ५ ॥

**कुसुमेति** । कुसुमानां वेण्या धृतानां परिमलेन सुगन्धा वेणिस्तत्र मधुकरावली यस्याः सा । पक्षे कुसुमानामुद्यानस्थानां । वेणिभूता मधुकरावली यस्याः सा । विद्रुमलतेव प्रवाललतेव अरुणः रक्तः हस्तपल्लवो यस्याः । पक्षे हस्त इव पल्लवो यस्याः । उज्ज्वलन्ती तनुः कोमला च बाहुलता यस्याः । निरतिशया चासौ स्वरूपशोभा च । तया । निरतिशये स्वरूपे च शोभा च ताभ्यामिति वा । जनिता बहवो विकल्पाः कल्पना यया सा

---

१ सुखमन० २ लभसे ३ सह्लाद ४ माला. ५ गात्रस्या ६ ससर्श. ७ का पुनरेषा ( का उण. )

पातालाद्भुवनावलोकनपरा किं नागकन्योत्थिता
मिथ्या तत्खलु दृष्टमेव हि मया तस्मिन्कुतोऽस्तीदृशी ।
मूर्ता स्यादिह कौमुदी न घटते तस्या दिवा दर्शनं
केयं हस्ततलस्थितेन कमलेनालोक्यते श्रीरिव ॥ ६ ॥

विदूषकः—( निरूप्य । ) एषा खलु देव्याः परिचारिकेन्दीवरिका । तद्गुल्मान्तरितौ भूत्वा पश्यावः । ( एसा क्खु देवीए परिआरिआ इन्दीवरिआ । ता गुम्मन्तरिआ भविअ पेक्खह्म । )

( उभौ तथा कुरुतः । )

चेटी—( कमलिनीपत्रग्रहणं नाटयन्ती । ) आरण्यिके अवचिनु त्वं पद्मानि । अहमप्येतस्मिन्नलिनीपत्रे शेफालिकाकुसुमान्यवचित्य देवीसकाशं गमिष्यामि । ( आरण्णिए अवचिणु तुमं पदुमाई । अहं वि एदस्सिं णलिणीपत्तम्मि सेहालिआकुसुमाई अवइणुअ देवीसआसं गमिस्सं । )

राजा—वयस्य संलाप इव वर्तते । तदवहिताः शृणुमः । कदाचिदित एव व्यक्तीभविष्यति ।

( चेटी गमनं नाटयति । )

आर०—हला इन्दीवरिके । न शक्नोमि त्वया विना मुहूर्तमप्यत्रासितुम् । ( हला इन्दीवरिए ण सक्कुणोमि तुए विणा मुहुत्तंवि एत्थ आसिदुं । )

चेटी—( विहस्य । ) यादृशमद्य मया देव्या मन्त्रितं श्रुतं तादृशेन चिरमेव मया विना त्वयासितव्यम् । ( जादिसं अज्ज मए देवीए मन्तिदं सुदं तारिसेण चिरं एव्व मए विणा तुए आसिदव्वं । )

---

तयोक्ता । पातालेति । भुवनस्य महीलोकस्यावलोकनपरा नागकन्यका पातालादुत्थिता किं स्यादिति वितर्क्य । नैतत्स्यादित्याक्षिपति । तन्मिथ्या खलु । मया दृष्टमेव हि । तस्मिन्पाताले ईदृशी लावण्यसम्पन्ना कन्यका कुतः । इह मूर्ता मूर्तिमती कौमुदी स्यात् । एतदपि न । तस्याः कौमुद्या दिवादर्शनं न घटते संभवति । केयं तर्हि या हस्ततलस्थितेन कमलेन श्रीः इव आलोक्यते । सन्देहालंकारः । शार्दूलविक्रीडितं वृत्तम् ॥ ६ ॥

यादृशं यत्प्रकारकम् । त्वद्विवाहसम्बन्धीति गूढम् । मन्त्रितं भाषितम् । तादृशेन तदनु-

---

१ धिया. २ कुतस्त्वी०. ३ रिका आगच्छति ( आअच्छदि ). ४ एतन्नास्ति बहुषु पुस्तकेषु. ५ नादृशं ( नारिसं ).

**आर०**—( सविषादम् । ) किं देव्या मन्त्रितम् । ( देवाए मन्तिदं । )

**चेटी**—एवम् । तदैवाहं महाराजेन भणिता यथा—यदैषा विन्ध्यकेतुदुहिता वरयोग्या भविष्यति तदाहं स्मारयितव्य इति । तत्सांप्रतं महाराजं स्मारयामि येनास्या वरचिन्तापर्याकुलो भविष्यति । ( एवं । तदा एसा अ० महाराएण भणिदा जह जदा एसा विञ्झकेदुदुहिदा वरजोग्गा भविस्सदि तदा अहं सुमराइदव्वात्ति । ता संपदं महाराअं सुमरावेमि जेण से वरचिन्तापज्जाउलो भविस्सदि । )

**राजा**—( सहर्षम् । ) इयं सा विन्ध्यकेतोर्दुहिता । ( सानुतापम् । ) चिरं मुषिताः स्मो वयम् । वयस्य निर्दोषदर्शना कन्यका खल्वियम् । विश्रब्धमिदानीं पश्याम ।

**आर०**—( सरोषं कर्णौ पिधाय । ) तद्गच्छ त्वम् । न मम त्वयासंबद्धप्रलापिन्या प्रयोजनम् । ( ता गच्छ तुमं । ण मह तुए असंबद्धप्पलाविणीए पओअणं । )

( चेट्यसहत्य पुष्पावचयं नाटयति । )

**राजा**—अहो सुतरां प्रकटीकृतमाभिजात्यं धीरतया । वयस्य धन्यः खल्वसौ य एतदङ्गस्पर्शसुखभाजनं भविष्यति ।

( आरण्यिका कमलावचयं नाटयति । )

**विदूषकः**—भो वयस्य पश्य पश्य । आश्चर्यमाश्चर्यम् । एषा सलिलचलत्करपल्लवप्रभाविस्तृतेनोपहसितशोभं करोति कमलवनमवचिन्वती । ( भो वअस्स पेक्ख पेक्ख । अच्चरिअं अच्चरिअं । एसा सलिलचलन्तकरपल्लवप्पहाविच्छुरिदेण आहसिदसोहं करेदि कमलवणं अवचिणन्ती । )

**राजा**—वयस्य सत्यमेवैतत् । पश्य ।

---

रोषादित्यर्थः । सानुतापमनुतापेन पश्चात्तापेन सहितं यथा तथा । विश्रब्धं यथा तथा । असम्बद्धं सन्दर्भरहितमनर्थकमिति यावत् । यदा वरयोग्या भविष्यतीत्यादि प्रलपतीति तथा तया । एषा नर्मोक्तिः । एवं शाकुन्तलेऽपि इमामसम्बद्धप्रलापिनीं प्रियंवदामार्यायै गौतम्यै निवेदयिष्यामीति शकुन्तलावाक्यम् । एषा कमलानि अवचिन्वती सलिले जले चलन्ती । करपल्लवस्य प्रभा तस्या विस्तृतेन विस्तारेण प्रसरणेनेत्यर्थः ।

---

१ तदाहं म० । यथा—यैषा स्त० यदा २ °नया स० ( °णए प० ) ३ चिरम्० ४ एत न्नास्ति क्वचित् ५ विच्छुरितेन ( विच्छुरिदेण ) ६ कमल = स्थल

अच्छिन्नामृतबिन्दुवृष्टिसदृशीं प्रीतिं ददत्या दृशां
याताया विगलत्पयोधरपटाद्द्रष्टव्यतां कामपि
अस्याश्चन्द्रमसस्तनोरिव करस्पर्शास्पदत्वं गता
नैते यन्मुकुलीभवन्ति सहसा पद्मास्तदेवाद्भुतम् ॥ ७ ॥

आर॰—( भ्रमरबाधां नाटयन्ती । ) हा धिक् हा धिक् । एते खल्वपरे परित्यज्य कमलिनीं नीलोत्पलवनानि समापतन्तो निपुणतरं बाधमाना आयासयन्ति मां दुष्टमधुकराः । ( उत्तरीयेण मुखं पिधाय सभयम् । ) हला इन्दीवरिके परित्रायस्व मां परित्रायस्व माम् । एते खलु दुष्टमधुकराः परिभविष्यन्ति । ( हद्धि हद्धि । एदे क्खु अवरे परिच्चइअ कमलिणीं णीलुप्पलवणाइं समापडन्ता णिउणअरं बाधन्ता आआसअन्ति मं दुट्ठमहुअरा । हला इन्दीवरिए परित्ताएहि मं परित्ताएहि मं । एदे क्खु दुट्ठमहुअरा परिभविस्सन्ति । )

विदूषकः—भो वयस्य पूर्णास्ते मनोरथाः । यावदेव गर्भदास्याः सुता नागच्छति तावदेव त्वमपि तूष्णीको भूत्वोपसर्प । एषापि सलिलशब्दसूचितेन पदसंचारेणेन्दीवरिकागच्छतीति ज्ञात्वा स्वयमेवावलम्बिष्यते । ( भो वअस्स पुण्णा दे मणोरहा । जाव एव्व गब्भदासीए सुदा ण आअच्छदि ताव एव्व तुमं वि तुण्हीको भविअ उवसप्प । एसा वि सलिलसद्दसूइदेण पअसंचारेण इन्दीवरिआ आअच्छदित्ति जाणिअ तुमं एव्व ओलम्बिस्सदि । )

राजा—साधु वयस्य साधु । कालानुरूपमुपदिष्टम् । ( इत्यारभ्य समीपमुपसर्पति । )

---

अच्छिन्नेति । दृशां नयनानां पश्यतामिति शेषः । दृशेति पाठे अवलोकनेनेत्यर्थः । अच्छिन्ना अनवरता या अमृतबिन्दूनां वृष्टिस्तस्याः सदृशीं प्रीतिमानन्दं ददत्याः । विगलन्यः पयोधरपटः स्तनांशुकं तस्मात्कामपि अनिर्वचनीयां द्रष्टव्यतां दर्शनीयतां यातायाः । चन्द्रमसः पक्षे विगलन्पयोधरः यः पयोधरो मेघः स एव पटस्तस्मात् । अतश्चन्द्रमसस्तनोरिव अस्याः करस्पर्शास्पदत्वं हस्तसंपर्कस्य पक्षे किरणसंसर्गस्य आस्पदत्वं स्थानतां गता एते पद्माः कमलानि । वा पुंसि पद्ममिति पुंलिंगता । सहसा न मुकुलीभवन्ति इति यत्तदेवाद्भुतम् । विशेषोक्तिः । शार्दूलविक्रीडितं वृत्तम् ॥ ७ ॥ अपरे कुसुमगन्धलम्पटाकृष्टाः प्रथमे । एते अन्ये इत्यर्थः । समापतन्तः संमुखाभिपतन्तः । निपुणतरं समधिकम् । द्विगुणतरमिति साधीयान्पाठः । परिभविष्यन्ति मामाक्रमिष्यन्तीत्यर्थः । एवं शाकुन्तलेऽपि—हला परित्रायेथां मामनेन दुर्विनीतेन मधुकरे-

---

१ दृष्टिपात. २ दृशा. ३ भेवार्थे, नाटयति. ४ परिवर्ज्य कमलिनीं नीलोत्पलवनं समाप॰ द्विगुणमायास॰ ( परिवज्जिअ कमलिणीं णीलुप्पलवणं समा॰ दिउणअर आ॰ ). ५ पिदधाति. ६ एषा दासी ( एसा दासी ). ७ भूत्वेन ( सलिलेण ). ८ स्वयमेव त्वामव॰ ( सअं एव्व तुमं ).

**आर०**—( पदशब्दाकर्णनं नाटयन्ती । ) इन्दीवरिके लघूपसर्प लघूपसर्प । आकुलीकृतास्मि दुष्टमधुकरैः । ( इन्दीवरिए । लहु उवसप्प लहु उवसप्प । आउलीकिदह्मि दुट्ठमहुअरेहिं । ( राजानमवलम्बते । )

( राजा कण्ठे गृह्णाति । व्यापिण्डोत्तरीय मुखादपनीय राजानमपश्यन्ती भ्रमरावलोकनं नाटयति । )

**राजा**—( स्वोत्तरीयेण भ्रमरान्निवारयन् । )

अयि विसृज विषादं भीरु भृङ्गास्तवैते
　परिमलरसलुब्धा वक्त्रपद्मे पतन्ति ।
विकिरसि यदि भूयस्त्रासलोलायताक्षी
　कुवलयवनलक्ष्मीं तत्कुतस्त्वां त्यजन्ति ॥ ८ ॥

**आर०**—( राजानं दृष्ट्वा साध्वसं नाटयन्ती । ) कथं नैषेन्दीवरिका । ( सभयं राजानं स्पृष्टवापसरन्ती । ) इन्दीवरिके । लघ्वागच्छ लघ्वागच्छ । परित्रायस्व माम् । ( कहं ण एसा इन्दीवरिआ । इन्दीवरिए । लहु आअच्छ लहु आअच्छ । परित्ताएहि मं । )

**विदूषकः**—भवति सकलपृथ्वीपरित्राणसमर्थेन वत्सराजेन परित्रायमाणा चेटीमिन्दीवरिकामाक्रन्दसि । ( होदि सअलपुहवीपरित्ताणसमत्थेण वच्छराएण परित्ताअन्ती चेडिं इन्दीवरिअं अक्कन्दसि । )

( राजा "अयि विसृज–" इत्यादि पुनः पठति । )

**आर०**—( राजानमवलोक्य सस्पृहं सलज्जं चात्मगतम् । ) अयं खलु स महाराजो यस्याहं तातेन दत्ता । स्थाने खलु तातस्य पक्षपातः । ( आकुलतां नाटयति । ) ( अअं क्खु सो महाराओ जस्स अहं तादेण दिण्णा । ठाणे क्खु तादस्स पक्खवादो । )

---

णाययिष्यमानामिति । गर्भादारभ्य दासी गर्भदासी । तूष्णीक मौनी । लघु शीघ्रम् । अयीति । अयि भीरु विषादं मुञ्च । एते परिमलरसे सौगन्ध्यास्वादे लुब्धा भृङ्गा तव वक्त्रपद्मे पतन्ति । त्रासेन भयेन लोले चपले आयते दीर्घे अक्षिणी यस्याः सा त्वं यदि भूयः कुवलयवनलक्ष्मीं इतस्ततो दृष्टिपातेन विकिरसि तर्हि त्वां कुतः परित्यजन्ति । न त्यजेयुरेव । मालिनी वृत्तम् । ननमयययुतेयं मालिनी भोगिलोकैः । इति तल्लक्षणम् ॥ ८ ॥ स्थाने युक्तं । पक्षपातः अतिशयितं प्रेम ।

---

१ इति रा०. २ पतन्ति. ३ लघ्वागच्छलघ्वागच्छ. ४ पुनरेव. भाग्यानि किं चेटीमा०

चेटी—आयासिता खल्वारण्यिका दुष्टमधुकरैः । तद्यावदुपसर्प्य समाश्वासयामि । आरण्यिके मा बिभिहि । एषोपगतास्मि । ( आआसिआ क्खु आरण्णिआ दुट्ठमहुअरेहिं । ता जाव उवसप्पिअ समस्सासेमि । आरण्णिए मा भआहि । एसा उवअदम्हि । )

विदूषकः—भोः अपसरापसर । एषा खल्विन्दीवरिकागता । एतं वृत्तान्तं प्रेक्ष्य देव्यै निवेदयिष्यति । ( अङ्गुल्या निर्दिश्य । ) तदिदमेव कदलीगृहं प्रविश्य मुहूर्तं तिष्ठावः । ( भो ओसर ओसर । एसा क्खु इन्दीवरिआ आअदा । एदं वुत्तन्तं पेक्खिअ देवीए णिवेदइस्सदि । ता इमं एव्व कदलीघरं पविसिअ मुहुत्तं चिट्ठम्ह । )

( उभौ तथा कुरुतः । )

चेटी—( उपगम्य कपोलौ स्पृशन्ती । ) हञ्जे आरण्यिके । कमलसदृशास्य तव वदनस्यायं दोषो यन्मधुकरा एवमपराध्यन्ति । ( हस्ते गृहीत्वा । ) तदेहि गच्छावः । परिणतो दिवसः । ( हञ्जे आरण्णिए कमलसरिसस्स तुह वअणस्स अअं दोसो जं महुअरा एव्वं अवरज्झन्ति । ता एहि गच्छम्ह । परिणदो दिअहो । )

( गमनं नाटयतः । )

आर०—( कदलीगृहाभिमुखमवलोक्य । ) हञ्जे इन्दीवरिके अतिशिशिरतया सलिलस्योरुस्तम्भ इव समुत्पन्नः । तच्छनैः शनैर्गच्छावः । ( हञ्जे इन्दीवरिए अदिसिसिरदाए सलिलस्स ऊरुत्थम्भो विअ समुप्पण्णो । ता सणिअं सणिअं गच्छम्ह । )

चेटी—तथा । ( तह । )

( इति निष्क्रान्ते । )

विदूषकः—भोः एहि निष्क्रामावः । तां गृहीत्वैषा दास्याः सुतेन्दीवरिका गता । ( भो एहि णिक्कमम्ह । तं गेण्हिअ एसा दासीए सुआ इन्दीवरिआ गदा । )

राजा—( निःश्वस्य । ) कथं गता । सखे वसन्तक । न खल्वविघ्नमभिलषितमधन्यैः प्राप्यते । ( विलोक्य । ) सखे पश्य पश्य ।

---

ऊरुस्तम्भ ऊरोर्जडिमा । समुत्पन्नः [illegible] । अतिस्नि[illegible]—एवं [illegible]—अहो [illegible] प्रार्थितार्थसिद्धयः । इति ।

---

१ मा भैषीः मा भैषीः । [illegible] ( [illegible] ). २ [illegible] ( [illegible] ). ३ [illegible]. ४ [illegible] [illegible] । [illegible] [illegible].

आबद्धमुखमपीदं कण्टकितं कमलकाननं तस्याः ।
सुकुमारपाणिपल्लवसंस्पर्शसुखं कथयतीव ॥ ९ ॥

( निःश्वस्य । ) सखे । क इदानीमुपायः पुनस्तां द्रष्टुम् ।

विदूषकः—भोः त्वमेव पुत्तलिकां भङ्क्त्वेदानीं रोदिषि । न ममैं खलु ब्राह्मणस्य वचनं करोषि । ( भो तुमं एव्व पुत्तलिअं भञ्जिअ दाणिं रोदिसि । ण मह क्खु बह्मणस्स वअणं करेसि । )

राजा—किं मया न कृतम् ।

विदूषकः—तदिदानीं विस्मृतम् । यथा तूष्णीको भूत्वोपसर्पेति मया भणितम् । अतिसंकटे यद्भवान्प्रविश्यालीकपाण्डित्यदुर्विदग्धतया “ अयि निस्तृज विषादम् ” इत्येतैरन्यैश्च कटुवचनैर्निर्भर्त्स्य सांप्रतं किं रोदिषि । पुनरप्युपायं पृच्छसि । ( तं दाणिं विसुमरिदं । जह तुण्हीओ भविअ उवसप्पेत्ति मए भणिदं । अदिसंकडे जं भवं पविसिअ अलिअपण्डिच्चदुव्विदद्धदाए अइ विसिज्ज विसादेत्ति एदेहिं अण्णेहिं अ कडुअवअणेहिं णिब्भच्छिअ संपदं किं रोदिसि । पुणो वि उवाअं पुच्छसि । )

राजा—कथं समाश्वासनमपि निर्भर्त्सितमिति भणितं मूर्खेण ।

विदूषकः—ज्ञातमेव कोऽत्र मूर्ख इति । तत्किमेतेन । अस्तमयाभिलाषी भगवान्सहस्ररश्मिः । तदेह्यभ्यन्तरमेव प्रविशावः । ( जाणिदं एव्व को एत्थ मुक्खोत्ति । ता किं एदेण । अत्थमआहिलासी भअवं सहस्सरस्सी । ता एहि अब्भन्तरं एव्व पविसम्ह । )

राजा—( विलोक्य । ) अये परिणतप्रायो दिवसः । अहह । संप्रति हि—

हृत्वा पद्मवनद्युतिं प्रियतमेवेयं दिनश्रीर्गता
रागोऽस्मिन्मम चेतसीव सवितुर्बिम्बेऽधिकं लक्ष्यते ।

---

आबद्धेति । इदं कमलकाननं पद्मवनं आबद्धं मुकुलितं मुखं यस्य तदाबद्धमुखमपि । कण्टकितं सञ्जातकण्टकं सरोमाञ्चं च सत् । तस्या आरण्यिकायाः यः सुकुमारः पाणिपल्लवः तस्य संस्पर्शेन जातं सुखं कथयतीव । उत्प्रेक्षालंकारः । पथ्यार्यावृत्तम् ॥ ९ ॥ पुत्तलिकां पाञ्चालिकाम् । अतिसंकटे इति सोपहासम् । अलीकपाण्डित्यं मिथ्यावैदग्ध्यं तेन दुर्विदग्ध· साभिमान पण्डितंमन्य इत्यर्थः । तस्य भावस्तत्ता तया । अस्तमयमभिलषतेऽस्तमयाभिलाषी आसन्नास्तमय इत्यर्थः । कृत्वेति । इयं दिनश्रीः पद्मवनस्य कान्तिं शोभां हृत्वा प्रिया आरण्यिका इव गता । अस्मिन्पुरो दृश्यमाने सवितुर्बिम्बे मम चेतसि इव रागो रक्तिमा अनुरागश्च अधिकं

---

१ अभ्युपायः २ मे दुर्बलस्य ( मे दुब्बलस्स ). ३ मया भणितम्.. विदग्ध '·अपि... कटुवचनैः भर्त्सना भर्त्सनं. ४ एहीनं. ५ दिनकरः ( दिणअरो ).

चक्राह्वोऽहमिव स्थितः सहचरीं ध्यायन्नलिन्यास्तटे
संजाता सहसा ममेव भुवनस्याप्यन्धकारा दिशः ॥ १० ॥

( इति निष्क्रान्ताः सर्वे । )

इति द्वितीयोऽङ्कः ।

---

## तृतीयोऽङ्कः ।

( ततः प्रविशति मनोरमा । )

**मनोरमा**—आज्ञप्तास्मि देव्या वासवदत्तया हञ्जे मनोरमे यः स साङ्कृत्यायन्यार्यपुत्रस्य मम च वृत्तान्तो नाटकोपनिबद्धस्तस्य नर्तितव्यशेषमद्य युष्माभिः कौमुदीमहोत्सवे नर्तितव्यमिति । ह्यः खल्वारण्यिकया प्रियसख्या शून्यहृदययान्यथैव नर्तितम् । अद्य पुनर्वासवदत्ताभूमिकया तया यदि तथा क्रियते ततोऽवश्यं देवी कुप्यति । तत्कुत्र तावत्तां प्रेक्ष्योपालप्स्ये । ( विलोक्य । ) एषारण्यिकात्मनैव किमपि किमपि मन्त्रयमाणा दीर्घिकातीरे कदलीगृहं प्रविशति । तद्गुल्मान्तरिता भूत्वा श्रोष्यामि तावदस्या विश्रब्धजल्पितानि । ( आणत्तह्मि देवीए वासवदत्ताए हञ्जे मणोरमे जं सं संकिच्चायणीए अज्जउत्तस्स मम अ वुत्तन्तो णाडओवणिबद्धो तस्स णच्चिदव्वसेसं

---

दृश्यते । चक्राह्व चक्रवाकः अहमिव सहचरीं ध्यायन् नलिन्याः तटे स्थितः । दिशः मम इव भुवनस्यापि सहसा अन्धकाराः अन्धकारवत्यः । अनाह्लादकरा इत्यर्थः । जाताः । ‘ अर्श आदिभ्योऽच् ’ इति मत्वर्थीयः अच् । उपमा । शार्दूलविक्रीडितं वृत्तम् ॥ १० ॥

इत आरभ्याङ्कसमाप्तिं यावत्प्रतिमुखाभिसन्धी । तत्रादौ वत्सराजारण्यिकासमागमहेतोरनुरागबीजस्य द्वितीयाङ्कोपक्षिप्तस्य मनोरमाविदूषकाभ्यां ज्ञायमानतया किंचिल्लक्ष्यस्य वासवदत्तयाऽज्ञाततया चालक्ष्यस्य दृश्यादृश्यरूपतयोद्भेदः प्रतिमुखसन्धिः । साङ्कृत्यायनी नाम काचित्परिव्राजिका ग्रन्थनिर्माणकुशला वासवदत्ताया विनोदयित्री । नर्तितव्यशेषं नाटयितव्यशेषम् । कौमुदीमहोत्सवे आश्विनस्य पूर्णिमायां क्रियमाणोत्सवे [। शून्यमन्यविषयगतं हृदयं यस्याः सा । हृदयेनासंनिहितेत्यर्थः । तया । भूमिका वेषः । उपालप्स्ये दोषं दास्यामि । मन्त्रयमाणा आत्मना व्याहरन्ती । गुल्मः लतागहनं तेनान्तरिता पिहिता । विश्रब्धजल्पितानि स्वैरभाषितानि ।

---

१ यस्सा० च य त्ति ( यदिति ). २ वासवदत्तायाः वेषं कृत्वा तथा नर्तिते देव्याः कोपो भविष्यति ( ०दत्ताए वेसं करिअ तह णच्चिदे देवीए कोवो हुविस्सदि ).

-अज्ज तुम्हेहिं कोमदीमहूसवे णच्चिदव्वंति । हिओ क्खु आरण्णिआए पिअसहीए सुण्ण-
हिअआए अण्णहा एव्व णच्चिदं । अज्ज उण वासवदत्ताभूमिआए ताए जइ तह करी-
अदि तदो अवस्सं देवो कुप्पदि । ता कहिं दाव ता पेक्खिअ उवालम्भिस्सं । एसा
आरण्णिआ अप्पणा एव्व किं वि किं वि मन्तअन्ती दिग्घिआतीले कदलीघरअं
पविसदि । ता गुम्मन्तरिआ भविअ सुणिस्सं दाव से वीसद्धजप्पिदाणि ।)

( ततः प्रविशत्यासन्नस्यां कामावस्थां नाटयन्त्यारण्यिका । )

**आर०**—( निःश्वस्य । ) हृदय दुर्लभजनं प्रार्थयमानं त्वं कस्मान्मां दुःखितां करोषि । ( हिअअ दुल्लहजणं पत्थअन्तो तुमं कीस मं दुक्खिदं करेसि । )

**मनो०**—तदेतदस्याः शून्यहृदयत्वस्य कारणम् । किं पुनरेषा प्रार्थयते । अवहिता तावच्छ्रोष्यामि । ( तं एदं एदस्स सुण्णहिअअत्तणस्स कारणं । किं उण एसा पत्थेदि । अवहिदा दाव सुणिस्सं । )

**आर०**—( सास्रम् । ) कथं तथा नाम सौम्यदर्शनो भूत्वा महाराज एवं संतापयति माम् । आश्चर्यमाश्चर्यम् । ( निःश्वस्य । ) अथवा ममैवैषाऽभागधेयता । न पुनर्महाराजस्य दोषः । ( कहं तह णाम सोम्मदंसणो भविअ महाराओ एव्वं संदावेदि मं । अच्चरिअं अच्चरिअं । अहवा मह एव्व एसा अभाअहेअदा । ण उण महाराअस्स दोसो । )

**मनो०**—( सखाप्पम् । ) कथं महाराज एवास्याः प्रार्थनीयः । साधु प्रियसखि साधु । आभिजात्यसदृशस्तेऽभिलाषः । ( कहं महाराओ एव्व से पत्थणिज्जो । साहु पिअसही साहु । अभिजाअसरिसो दे अहिलासो । )

**आर०**—कस्मै तावदेतं वृत्तान्तं निवेद्य सह्यवेदनमिव दुःखं करिष्यामि । ( विचिन्त्य । ) अथवा अस्ति मे हृदयनिर्विशेषा प्रियसखी मनोरमा । तस्या अप्येतल्लज्जया न पारयामि कथयितुम् । सर्वथा मरणं वर्जयित्वा कुतो मे हृदयस्यान्या निर्वृतिः । ( कस्स दाव एदं उत्तन्तं णिवेदिअ सज्झवेअणं विअ दुक्खं करइस्सं । अहवा अत्थि मे हिअअणिव्विसेसा पिअसही मणोरमा । ताए वि एदं लज्जाए ण पारेमि कहिदुं । सव्वहा मरणं वज्जिअ कुदो मे हिअअस्स अण्णा णिव्वुदी । )

---

दुर्लभजनं वत्सराजमित्यर्थः । प्रार्थयमानमभिलष्यत् । अवहिता सावधाना । अभागधेयता मन्दभाग्यत्वम् । हृदयान्निर्गतो विशेषो यस्याः सा । पारयामि शक्नोमि । निर्वृतिः सुखम् ।

---

१ त्यारण्यिका । ( आ०—कामावस्था नाटयन्ती निःश्वस्य । ). २ शोभन ( शोहण० ). ३ साधु प्रियसखि. ४ इदानीं ( दाणिं ).

**मनोरमा**—( सास्रम् । ) हा धिक् हा धिक् । अतिभूमिं गतोऽस्यास्तपस्विन्या अनुरागः । तत्किमिदानीमत्र करिष्यामि । ( हद्धि हद्धि । अदिभूमिं गदो से तवस्सिणीए अणुराओ । ता किं दाणिं एत्थ करिस्सं । )

**आर०**—( साभिलाषम् । ) अयं स उद्देशो यस्मिन्मधुकरैरायास्यमानावलम्ब्य महाराजेन समाश्वासितास्मि भीरु मा बिभीहीति । ( अअं सो उद्देसो जस्सिं महुअरेहिं आआसिज्जन्ती ओलम्बिअ महाराएण समस्सासिदह्मि भीरु मा भआहित्ति । )

**मनोरमा**—( सहर्षम् । ) कथमेषापि दृष्टा महाराजेन । सर्वथास्त्यस्या जीवितस्योपायः । यावदुपसृत्य समाश्वासयाम्येनाम् । ( सहसोपसृत्य । ) युक्तं नाम हृदयस्यापि लज्जितुम् । ( कहं एसा वि दिट्ठा महाराएण । सव्वहा अत्थि से जीविदस्स उवाओ । जाव उवसप्पिअ समस्सासेमि णं । जुत्तं णाम हिअअस्स वि लज्जिदुं । )

**आर०**—( सलज्जमात्मगतम् । ) हा धिक् हा धिक् । सर्वं श्रुतमेतया । तदत्र युक्तमेव प्रकाशयितुम् । ( प्रकाशं हस्ते गृहीत्वा । ) प्रियसखि मा कुप्य मा कुप्य । लज्जैवात्रापराध्यति । ( हद्धि हद्धि । सव्वं सुदं एदाए । ता एत्थ जुत्तं एव्व पआसइदुं । पिअसहि मा कुप्प मा कुप्प । लज्जा एव्व एत्थ अवरज्झदि । )

**मनो०**—( सहर्षम् । ) सखि अलं शङ्कया । एतन्म आचक्ष्व । सत्यमेव त्वं महाराजेन दृष्टा न वेति । ( सहि अलं संकाए । एदं मे आअक्ख । सच्चं एव्व तुमं महाराएण दिट्ठा ण वेत्ति । )

**आर०**—( सलज्जमधोमुखी ) श्रुतमेव प्रियसख्या सर्वम् । ( सुदं एव्व पिअसहीए सव्वं । )

**मनोरमा**—यदि दृष्टा महाराजेन त्वं तदलं संतापितेन । स एवेदानीं दर्शनोपायपर्याकुलो भविष्यति । ( जइ दिट्ठा महाराएण तुमं ता अलं संतप्पिदेण । सो एव्व दाणिं दंसणोवाअपज्जाउलो भविस्सदि । )

---

अतिभूमिं परां कोटिम् । तपस्विन्याः अनुकम्पायाः । वराक्या इत्यर्थः । हृदयस्यापि स्वहृदयादप्यतिरिक्ताया ममेत्यर्थः । आत्मगतं, प्रकाशं—सर्वश्राव्यं प्रकाशं स्यादश्राव्यं स्वगतं मतम् । इति दशरूपके । दर्शनोपायपर्याकुलः दर्शनोपायचिन्ताव्यग्रः ।

---

१ नाम किं, हृदयस्य-सखीजनस्य. २ लज्जा नाटयन्ती आ०. ३ नव दर्श०.

**आर०**—अयं सखीजनः पक्षपातेन मन्त्रयते । अयि सखिपक्षपातिनि । देवीगुणनिगडनिबद्धे खलु तस्मिञ्जने कुत एतत् । ( अअं सहीअणो पक्खवादेण मन्तेदि । अइ सहिपक्खवादिणि । देवीगुणणिअलणिबद्धे क्खु तस्सिं जणे कुदो एदं । )

**मनोरमा**—( विहस्य । ) हला अपण्डिते कमलिनीबद्धानुरागोऽपि मधुकरो मालतीं प्रेक्ष्याभिनवरसास्वादलम्पटः कुतस्तामनासाद्य स्थितिं करोति । ( हला अपण्डिदे कमलिणीबद्धाणुराओ वि महुअरो मालदिं पेक्खिअ अहिणवरसास्सादलम्पडो कुदो तं अणासादिअ ठिदिं करेदि । )

**आर०**—किमेतेनासंभावितेन । तदेहि । अधिकं खलु शरदातपेन संतप्तान्यद्यापि न मेऽङ्गानि संतापं मुञ्चन्ति । ( किं एदिणा असंभाविदेण । ता एहि । अहिअं क्खु सरदादवेण संतप्पाइं अज्ज वि ण मे अङ्गाइं संदावं मुञ्चन्दि । )

**मनोरमा**—अयि लज्जालुके न युक्तमेतदवस्थां गतयापि त आत्मा प्रच्छादयितुम् । ( अइ लज्जालुए ण जुत्तं एदावत्थं गदाए वि दे अप्पा पच्छादिदुं । )

( आरण्यिका मुखमवनमयति । )

**मनोरमा**—अयि अविश्रम्भशीले किमिदानीं प्रच्छादयसि । निश्वासनिभविनिर्गतो दिवसं रात्रिमपि तवानुरागोऽविरतपतत्कुसुमशरशरनिवहप्रवृत्तहुङ्कारशब्द इव न भणति । ( आत्मगतम् । ) अथवा न खल्वयं काल उपालम्भस्य । तद्यावत्कमलिनीपत्राण्यस्या हृदये दास्यामि । ( उत्थाय

---

देवीगुणा एव निगडः लोहबन्धस्तेन निबद्धे । मालती जातिपुष्पम् । लम्पटो लोलुपः । स्थितिं करोति स्वास्थ्यमेति । लज्जां लाति इति लज्जालुः । 'सिध्मादिभ्य उपसंख्यानम्' इति वार्तिकेन लुः । सैव लज्जालुका । अविश्रम्भशीले प्रकृत्यात्मन्यविश्वासिनि । निश्वासनिभविनिर्गतः निश्वासच्छलेन विनिर्गतः । अविरतं पतन्त्यः कुसुमशरस्य मदनस्य शरनिवहो बाणसमूहस्तस्मात्प्रवृत्तः हुंकारशब्द इव । न भणति न तवावस्थां कथयति किम् ।

---

१ एतद्वाक्यं नास्ति पुस्तकान्तरे. २ सखीजनपक्षपातेन मन्त्रयसे । ( सहीअणपक्खवादेण मन्तेसि ). ३ एतन्नास्ति क्वचित्.

४ अस्य स्थाने—श्वासनिभान्निर्गतो दिवसं रात्रिमपि तवानुरागः ।
अविरतपतन्मन्मथशरशतहुङ्कारशब्द इव ॥
( सासणिहा णिग्गमिओ दिअहं रत्तिं वि तुज्झ अणुराओ ।
अविरअपडनमम्महसरसअहुंकार सद्दोव्व ॥ ) इति पद्यं क्वचित्.

५ तत्तावद०

दीर्घिकाया नलिनीपत्राणि गृहीत्वारण्यिकाया हृदये ददती ।) समाश्वसितु सखी समाश्वसितु सखी । ( अइ अविसंम्भसीले किं दाणिं पच्चादेसि । णीसासणिइविणिग्गओ दिअहं रत्तिं वि तुज्झ अणुराओ अविरदपडन्तकुसुमसरसरणिवहपउत्तहुंकार- सद्दो विअ ण भणइ । अहवा ण हु अअं कालो उवालम्भस्स । ता जाव णलिणीपत्ताइं से हिअए दाइस्सं । समस्ससदु सही समस्ससदु सही ।)

( ततः प्रविशति विदूषकः । )

**विदूषकः**—अतिमहान् खलु प्रियवयस्यस्यारण्यिकाया उपर्यनुरागः। येन परित्यक्तराजकार्यस्तस्या एव दर्शनोपायं चिन्तयन्नात्मानं विनोदयति। ( विचिन्त्य । ) कुत्रेदानीं तां प्रेक्षे । अथवा तत्रैव तावद् दीर्घिकायामन्विष्यामि । ( परिक्रामति । ) ( अदिमहन्तो क्खु पिअवअस्सस्स आरण्णिआए उवरि अणुराओ । जेण परिच्चत्तराअकज्जो ताए एव्व दंसणोवाअं चिन्तअन्तो अप्पाणं विणोदेइ । कहिं दाणिं तं पेक्खे । अहवा तहिं एव्व दाव दिग्घिआए अण्णेसामि । )

**मनोरमा**—( आकर्ण्य । ) पदशब्द इव श्रूयते । तत्कदलीगुल्मान्तरिते भूत्वा प्रेक्षावहे तावत्क एष इति । ( पदसद्दो विअ सुणीअदि । ता कदलीगुम्मन्तरिदा भविअ पेक्खम्ह दाव को एसोत्ति । )

( उभे तथा कृत्वा पश्यतः । )

**आर०**—कथं स एव महाराजस्य पार्श्वपरिवर्ती ब्राह्मणः । ( कहं सो एव्व महाराअस्स पासपरिवट्टी बह्मणो । )

**मनोरमा**—कथं वसन्तक एव । ( सहर्षमात्मगतम् । ) अपि नाम तथा भवेत् । ( कहं वसन्तओ एव्व । अवि णाम तह हवे । )

**विदूषकः**—( दिशोऽवलोक्य । ) किमिदानीमारण्यिका सत्यमेवं संवृत्ता । ( किं दाणिं आरण्णिआ सच्चं एव्व संवुत्ता । )

**मनोरमा**—( सस्मितम् । ) सखि राजवयस्यः खलु ब्राह्मणस्त्वामुद्दिश्य मन्त्रयते । तत्तावदवहिते शृणुवः । ( सहि राअवअस्सो क्खु बह्मणो तुमं उद्दिसिअ मन्तेदि । ता दाव अवहिदा सुणम्ह । )

( आरण्यिका सहर्षं सलज्जं च शृणोति । )

**विदूषकः**—( सोद्वेगम् । ) यदा तावन्मया गुरुमदनसंतापनिस्सहतया भर्त्रा राजाज्ञयारण्यिकान्वेषणार्थमागतो मनोदित्याशयः। गुरुदुर्भरः मदनसंतापकेन

१ सखि समाश्वसिहि समा०, २ नाटक०. ३ इति पा०. ४ राग०, ५ इत्यारण्यिका.
६ यदा तावन्मया इति आरितगुल्मकान्तरे ।

शरीरस्य प्रियवयस्यस्य वैचनेन देव्योर्वासवदत्तापद्मावत्योरन्यासां च देवीनां भवनान्यन्विष्यता न सा दृष्टा तदा यत्र दीर्घिकायां दृष्टेदमपि तावत्प्रेक्षिष्य इत्यागतोऽस्मि । तथात्रेहापि नास्ति । किमिदानीं करिष्ये । ( अदा दाव मए गुरुअअणङ्गदावणीसहसरीरस्स पिअवअस्सस्स वअणेण देवीण वासवदत्तापदुमावदीण अण्णाणं अ देवीण भवणाइ अण्णेसन्तेण ण सा दिट्ठा तदा जहिं दिग्घिआए दिट्ठा इदं वि दाव पेक्खिस्सं ति आअदोम्हि । ता जाव इह वि णत्थि । किं दाणिं करिस्सं । )

**मनोरमा**—श्रुतं प्रियसख्या । ( सुदं पिअसहीए । )

**विदूषकः**—( विचिन्त्य । ) अथवा भणित एवाहं वयस्येन । यदि तामन्विष्यन्न प्रेक्षसे ततस्तोऽपि तावद्दीर्घिकातस्तस्याः करतलस्पर्शद्विगुणितसुखशीतलानि नलिनीपत्राणि गृहीत्वागच्छेति । तत्कथमेतानि ज्ञातव्यानि । ( अहवा भणिदो एव्व अहं वअस्सेण । जइ तं अण्णेसन्तो ण पेक्खसि ता तदो वि दाव दिग्घिआदो ताए करअलप्फरिसदिउणिअसुहसीअलाइं णलिणीपत्ताइं गेण्हिअ आअच्छसि । ता कहं एदाइं जाणिदव्वाइं । )

**मनोरमा**—अयं ममावसरः । ( उपसृत्य विदूषकं हस्ते गृहीत्वा । ) वसन्तक एहि । अहं ते ज्ञापयामि । ( अअं मे अवसरो । वसन्तअ एहि । अहं दे जाणावेमि । )

**विदूषकः**—( ससंभ्रमम् । ) कस्य त्वं ज्ञापयसि । किं देव्याः । न खलु मया किमपि मन्त्रितम् । ( कस्स तुमं जाणावेसि । किं देवीए । ण हु मए किं वि मन्तिदं । )

**मनोरमा**—वसन्तक अलं शङ्कया । यादृश्यारण्यिकायाः कृत आत्मनः प्रियवयस्यस्यावस्था त्वया वर्णिता ततो द्विगुणतरा भर्तुरपि कृते मम प्रियसख्या अवस्था । तत्पश्य पश्य । ( वयस्यामारण्यिकां दर्शयति । ) ( वसन्तअ अलं सङ्काए । जादिसी आरण्णिआए किदे अत्तणो पिअवअस्सस्स अवत्था तुए वण्णिदा तदो दिउणदरा भट्टिणो वि किदे मम पिअसहीए अवत्था । ता पेक्ख पेक्ख । )

---

निस्सहं दुर्बलं शरीरं यस्य तस्य । अस्वस्थवचनेन इति पाठे पर्याकुलवचनेन अस्वस्थ इति वचनेन वा । इदमपि दीर्घिकास्थानमपि । तस्याः करतलस्य स्पर्शेन द्विगुणितसुखानि च तानि शीतलानि च ।

---

१ अस्वस्थव° २ देव्या वासवदत्तया प्रेमावत्याश्च ३ तदा यत्र दीर्घिकायां दृष्टा इति नास्ति क°, ४ अन्वेषयन्, ५ स्पर्शसुख ६ ° दर उण ( °तर पुन ).

**विदूषकः**—( हर्षं सहर्षम् । ) सफलो मे परिश्रमः । स्वस्ति भवत्यै । ( सफलो मे परिस्समो । सोत्थि होदीए । )

( आरण्यिका सलज्जं कमलिनीपत्राण्यपनीयोत्तिष्ठति ।

**मनोरमा**—आर्य वसन्तक । तव दर्शनेनैवापगतः प्रियसख्याः संतापो येन स्वयमेव नलिनीपत्राण्यपनयति । तदनुगृह्णात्वार्य इमानि । ( अज्ज वसन्तअ तुह दंसणेण एव्व अवगदो पिअसहीए संदावो जेण सअं एव्व णलिणीपत्ताइं अवणेइ । ता अणुगण्हादु अज्जो इमाइं । )

**आरण्यका**—( सावेगम् । ) अयि परिहासशीले । कस्मान्मां लज्जयसि । ( किंचित्पराङ्मुखी तिष्ठति । ) ( अइ परिहाससीले । कीस मं लज्जावेसि । )

**विदूषकः**—( सविषादम् । ) तिष्ठन्तु तावन्नलिनीपत्राणि । अतिलज्जालुका ते प्रियसखी । तत्कथमेतयोः समागमो भविष्यति । ( चिट्ठंदु दाव णलिणीपत्ताइं । अदिलज्जालुआ दे पिअसही । ता कहं एदाणं समाअमो भविस्सदि ।

**मनोरमा**—( क्षणं विचिन्त्य सहर्षम् । ) वसन्तक एवमिव । ( कर्णे कथयति । ) ( वसन्तअ एव्वं विअ । )

**विदूषकः**—साधु प्रियसखि साधु । ( अपवार्य । ) यावदेव युवां नेपथ्यग्रहणं कुरुथस्तावदेवाहमपि वयस्यं गृहीत्वागच्छामि । ( इति निष्क्रान्तः । ) साहु पिअसहि साहु । जाव एव्व तुम्हे णेवच्छग्गहणं करेत्थ दाव एव्व अहं वि वअस्सं गेण्हिअ आअच्छामि । )

**मनोरमा**—अतिकोपने उत्तिष्ठोत्तिष्ठ । नर्तितव्यमस्माभिस्तस्यैव नाटकस्य नर्तितशेषम् । तदेहि । प्रेक्षागृहमेव गच्छावः । ( परिक्रम्यावलोक्य । ) इदं प्रेक्षागारम् । यावदेहि प्रविशावः । ( प्रविश्यावलोक्य । ) साधु साधु सर्वं सज्जीकृतम् । देव्यागन्तव्यम् । ( अदिकोवणे । उट्ठेहि उट्ठेहि । णच्चिदव्वं अह्मेहिं तस्स एव्व णाडअस्स णच्चिदसेसं । ता एहि । पेक्खाघरं एव्व गच्छम्ह । इदं पेक्खागारं । जाव एहि पविसम्ह । साहु साहु । सव्वं सज्जीकिदं । देवीए आअन्तव्वं ।

( ततः प्रविशति देवी सांकृत्यायनी विभवतश्च परिवारः । )

---

नेपथ्यग्रहणं वासवदत्तावत्सराजयोः वेशग्रहणमिति यावत् ।

---

– १ ओगदो. २ लज्जापयसि. ३ साहु पिअसहि. ४ णच्चिदव्व ( णर्तितव्य° ). ५ °घर. ६ साधु एदे सज्जी°.

वासवदत्ता—भगवति अहो ते कवित्वम् । येनैतद्गूढवृत्तान्तं नाटकोपनिबद्धं सानुभवमप्यस्माकमार्यपुत्रचरितमदृष्टपूर्वमिव दृश्यमानमधिकतरं कौतूहलं वर्धयति । ( भअवदि अहो दे कवित्तणं । जेण एदं गूढवुत्तन्तं णाडओवणिबद्धं साणुभवं वि अह्माणं अज्जउत्तचरिदं अदिट्ठपुव्वं विअ दिस्सन्तं अहिअदरं कोदूहलं वड्ढावेदि । )

साङ्कृत्यायनी—आयुष्मति आश्रयगुण एवायमीदृशो यदसारमपि काव्यमवश्यमेव शृण्वतां श्रवणसुखमुत्पादयति । पश्य ।

> प्रायो यत्किंचिदपि प्राप्नोत्युत्कर्षमाश्रयान्महतः ।
> मत्तेभकुम्भतटगतमेति हि शृङ्गारतां भस्म ॥ १ ॥

वासवदत्ता—( सस्मितम् ) भगवति सर्वस्य वल्लभो जामाता भवतीति ज्ञायत एवैतत् । तत्किमेतेन कथानुबन्धेन । परं तदेव नर्तितव्यं द्रष्टुम् । ( भअवदि सव्वस्स वल्लहो जामादो होदित्ति जाणीअदि एव्व एदं । ता किं एदिणा कहाणुबन्धेण । परं तं एव्व णच्चिदव्वं दट्ठुं । )

साङ्कृत्यायनी—एवम् । इन्दीवरिके प्रेक्षागृहमादेशय ।

चेटी—एतु एतु भट्टिनी । ( एदु एदु भट्टिणी । ) ( सर्वाः परिक्रामन्ति । )

साङ्कृत्यायनी—( विलोक्य । ) अहो प्रेक्षणीयता प्रेक्षागृहस्य ।

> आभाति रत्नशतशोभितशातकुम्भ-
> स्तम्भावसक्तपृथुमौक्तिकदामरम्यम् ।
> अध्यासितं युवतिभिर्विजिताप्सरोभि
> प्रेक्षागृहं सुरविमानसमानमेतत् ॥ २ ॥

---

कवित्वं काव्यनिर्माणनैपुण्यम् । गूढः वृत्तान्तो यस्य तत् । नाटकोपनिबद्धं प्रयोगार्हं कृतम् । प्रेक्षागृहं नाट्यशाला । **प्राय इति** । यत्किंचिदपि सारं माहात्म्यरहितं वापि वस्तु महतः आश्रयात्सम्बन्धात्कारणात् उत्कर्षमौत्कृष्ट्यं प्राप्नोति । अत्र दृष्टान्तमाह—भस्म असारत्वेन प्रसिद्धं मत्तेभस्य मत्तगजस्य कुम्भतटगतं सत् शृङ्गारतां शृङ्गारं भूषणं गजमण्डनविशेषो वा तत्तां प्राप्नोति हि ध्रुवम् ॥ १ ॥ **आभातीति** । रत्नानां शतानि रत्नशतानि तैः शोभिता शातकुम्भस्य सुवर्णस्य स्तम्भास्तेषु अवसक्तानि पृथूनि मौक्तिकदामानि मुक्तामालास्तैः रम्यम् । विजिता स्वस्वरूपनिरस्ता इत्यर्थः । अप्सरसो याभिस्ताभिः युवतिभिः अध्यासितमेतत्प्रेक्षागृहं सुरविमानसमानमाभाति । वसन्ततिलका वृत्तम् । लक्षणमुक्तम् ॥ २ ॥

---

१ यतीति, २ एत, ३ णविद

**मनोरमारण्यिके**—( उपसृत्य । ) जयतु जयतु भर्त्रिनी । ( जेदु जेदु भट्टिणी । )

**वासवदत्ता**—मनोरमे अतिक्रान्ता खलु संध्या । तद्गच्छतम् । लघु गृहीतं नेपथ्यम् । ( मणोरमे अदिक्कन्दा क्खु संज्झा ता गच्छह । लहु गण्हह णेवच्छं । )

**उभे**—यद्देव्याज्ञापयति । ( इति प्रस्थिते । ) ( जं देवी आणवेदि । )

**वासवदत्ता**—आरण्यिके एतैरेव मदङ्गपिनद्धैराभरणैर्नेपथ्यभूमिं गत्वात्मानं प्रसाधय । ( आभरणान्यङ्गादवतार्यारण्यिकायाः समर्पयति[1] ) मनोरमे त्वमपि नलगिरिग्रहणपरितुष्टेन तातेनार्यपुत्रस्य दत्तान्याभरणानीन्दीवरिकासकाशाद्गृहीत्वा नेपथ्यभूमिं गत्वात्मानं मण्डय येन सुसदृशी दृश्यसे महाराजस्य । ( आरण्णिए एदेहिं एव्व मदङ्गपिणद्धेहिं आभरणेहिं णेवच्छभूमिं गदुअ अप्पाणं पसाहेहि । मणोरमे तुमं [illegible] णलगिरिगहणपरितुट्ठेण तादेण अज्जउत्तस्स दिण्णाइं आभरणाइं इन्दीवरिआसआसादो गेण्हिअ णेवच्छभूमिअं गदुअ अप्पाणं मण्डेहि जेण सुसरिसी दीससि महाराअस्स । )

( मनोरमा इन्दीवरिकासकाशादाभरणानि गृहीत्वा सहारण्यिकया निष्क्रान्ता । )

**इन्दीवरिका**—इदमासनम् । उपविशतु भर्त्रिनी । ( एदं आसणं । उवविसदु भट्टिणी । )

**वासवदत्ता**—( आसनं निर्दिश्य । ) उपविशतु भगवती । ( उवविसदु भअवदी । )

( उभे उपविशतः । )

( ततः प्रविशति गृहीतनेपथ्यः कञ्चुकी । )

**कञ्चुकी**—

> अन्तःपुराणां विहितव्यवस्थः
> पदे पदेऽहं स्खलितानि रक्षन् ।

---

मदङ्गपिनद्धैर्मदङ्गे बद्धैः । धारितैरित्यर्थः । प्रसाधय मण्डय । नलगिरिर्नाम इन्द्रदत्तः प्रद्योतस्य गजः तस्य आलानमुत्पाट्य प्रभ्रष्टस्य ग्रहणं तेन परितुष्टस्तेन । **अन्तःपुराणामिति**। अन्तःपुराणामवरोधस्त्रीणां विहिता व्यवस्था व्यवस्थापनं येन सः । पदे पदे प्रतिपदं स्खलितानि प्रमादान् रक्षन् परिहरन् । राजदारान् प्रमादेभ्यो रक्षन्नित्यर्थः । संप्रति जरातुरः दण्डनीत्या दण्डेन नीतिस्तमवलम्ब्य गमनं तेन नृपस्य सर्वचरितमनुकरोमि विडम्बयामि । नृपो पुराणामन्तःप्रजानां स्थितिपालनादिरूपां व्यवस्थां करोति । प्रजाः

१ एतन्नास्ति पुस्तकान्तरे. २ इदं. ३ आसनग्रहणं नाटयतः.

जरातुरः समति दण्डनीत्या
सर्वं नृपस्यानुकरोमि वृत्तम् ॥ ३ ॥

भोः आज्ञापितोऽस्मि विमानिताशेषशत्रुसैन्येन यथार्थनाम्ना महासेनेन समादिश्यतामन्तःपुरेषु यथा—श्वो वयमुदयनोत्सवमनुभवाम । अतो युष्माभिरुत्सवानुरूपवेषोज्ज्वलेन परिजनेन सह मन्मथोद्यानं गन्तव्यमिति ।

साङ्कृत्यायनी—( कञ्चुकिनं निर्दिश्य । ) राजपुत्रि प्रवृत्ता प्रेक्षा । दृश्यताम् ।

कञ्चुकी—तदेवैतदादेष्टव्यं परिजनेन सह गन्तव्यमिति । न गृहीतनेपथ्येनेति । कुतः ।

पादैर्नूपुरिभिर्नितम्बफलकैः शिञ्जानकाञ्चीगुणै-
र्हारापादितकान्तिभिः स्तनतटैः केयूरिभिर्बाहुभिः ।
कर्णैः कुण्डलिभिः करैः सवलयैः सस्वस्तिकैर्मूर्धजै-
र्देवीनां परिचारिकापरिजनोऽप्येतेषु संदृश्यते ॥ ४ ॥

न खलु किंचिदत्रापूर्वमनुष्ठेयम् । केवलं स्वाम्यादेश इति मत्वाहं समादिष्टस्तदाज्ञाशेषं राजपुत्र्यै निवेदयामि । ( परिक्रम्यावलोक्य च । ) इय

प्रमादेभ्यो निवारयति । दण्डनीत्या अर्थशास्त्रानुसारेण प्रजा रक्षति च । दण्डनीतिनिरुक्तिस्तु दण्डेन नीयते चेदं दण्डं नयति वा पुनः । दण्डनीतिरिति ख्याता त्रान् लोकानतिवर्तते ॥ इति । श्लिष्टोपमालंकारः । वृत्तमुपजातिः । स्यादिन्द्रवज्रा यदि तौ जगौ गः । उपेन्द्रवज्रा जतजास्ततो गौ । अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः ॥ इति तल्लक्षणम् ॥३॥ विमानितानि तिरस्कृतान्यशेषाणां शत्रूणां सैन्यानि येन । महासेनश्चण्डमहासेन इत्यपराभिध उज्जयिनीनृपः । प्रेक्षा नृत्तम् । प्रेक्षाभीरीक्षणं नृत्तम् । इति हैमः । पादैरिति । नूपुराणि मञ्जीरा एषां विद्यन्ते इति नूपुरिणस्तैः पादैः । शिञ्जाना शब्दायमाना काञ्चीगुणा मेखलादामानि येषां येषु वा तैस्तथोक्तैः नितम्बफलकैः प्रशस्तनितम्बैः । हारैर्मुक्तासरैः आपादिता निर्मिता कान्तिर्येषां तादृशैः स्तनतटैः । केयूरिभिः अङ्गदसहितैर्बाहुभिः । कुण्डलिभिः कुण्डलधारिभिः कर्णैः । सवलयैः कङ्कणयुक्तैः करैः सस्वस्तिकैः स्वस्तिकाख्यालंकारधरैः । स्वस्तिकं मङ्गलद्रव्यविशेषो वा तद्युक्तैः । मूर्धजैः केशपाशैः उपलक्षितः । देवीनां पूज्यायाः देव्याः । पूजार्थे बहुवचनम् । परिचारिकापरिजनः सेवकवर्गोऽपि एतेषु अन्तःपुरेषु दृश्यते । पूर्वमेव कृतनेपथ्यो वर्तत इत्यर्थः । शार्दूलविक्रीडितं वृत्तम् ॥ ४ ॥

१ एतावदत्र २ गृहीत॰ मादृष्टव्यम् ; न वयाज्वलनात ३ समादिष्ट

सा वासवदत्ता वीणाहस्तया काञ्चनमालयानुगम्यमाना गन्धर्वशालां प्रविष्टा । यावदस्याः कथयामि । ( परिक्रमति । ).

( ततः प्रविशति गृहीतवासवदत्तानेपथ्यासनस्थारण्यिका वीणाहस्ता काञ्चनमाला च । )

**आर०**—हला काञ्चनमाले कस्मात्पुनश्चिरयत्यद्यापि वीणाचार्यः । ( हला कञ्चणमाले कीस उण चिराअदि अज्ज वीणाआरिओ । )

**काञ्च०**—भर्तृदारिके दृष्टस्तेनैक उन्मत्तः । तस्य वचनं श्रुत्वा चित्रेण भावितोऽपहसंस्तिष्ठति । ( भट्टिदारिए दिट्ठो तेण एक्को उम्मत्तो । तस्स वअणं सुणिअ चित्तेण भाविदो ओहसन्तो चिट्ठइ । )

**आर०**—( सहस्ततालं विहस्य । ) हञ्जे सुष्ठुतं पृच्छति । सदृशाः सदृशे रमन्त इति द्वावप्युन्मत्तौ । ( हञ्जे सुठ्ठु एदं पुच्छदि । सरिसा सरिसे रमन्तित्ति दुवे एत्थ उम्मत्ता । )

**साङ्कृत्यायनी**—राजपुत्र्याः सदृशमाकारं पश्याम्यस्यास्तादृशेनाकारेणावश्यं त्वदीयां भूमिकां संभावयिष्यति ।

**कञ्चुकी**—( उपसृत्य । ) राजपुत्रि देवस्त्वामाज्ञापयति । श्वोऽद्य-इयमस्माभिर्वीणां वादयन्ती श्रोतव्या । तत्त्वया नवतन्त्रीसज्जया घोषवत्या स्थेयमिति ।

**आर०**—आर्य यद्येवं लघु वीणाचार्यं विसर्जय । ( अज्ज जइ एव्वं लहु वीणाआरिअं विसज्जेहि । )

**कञ्चुकी**—एष वत्सराजं प्रेषयामि । ( इति निष्क्रान्तः । )

**आर०**—काञ्चनमाले उपनय मे घोषवतीं यावदस्यास्तन्त्रीः परीक्षे । ( कञ्चणमाले उवणेहि मे घोसवदीं जाव से तंतीओ परिक्खेमि । )

( काञ्चनमाला वीणामर्पयति । आरण्यिकोत्सङ्गे वीणां कृत्वा सारयति । )

( ततः प्रविशति गृहीतवत्सराजनेपथ्या मनोरमा । )

---

वासवदत्तात्र वासवदत्तावेषधारिणी आरण्यिका ज्ञेया । गंधर्वशाला प्रेक्षागृहम् । चित्रेण भावितो वैचित्र्यहृतचित्तः । सहस्ततालं हस्तौ प्रताड्य । सदृशाः सदृशे इ०--सर्वैः सगन्धेषु विश्वसितीति । द्वावप्युन्मत्तकौ । इति समानार्थं वचनं शाकुन्तले । सारयेत राजपुत्र्युचितेन घोषवत्या वीणया सहितया । लघु शीघ्रम् । समदनावस्थो राजा स्वमनोवस्थामाह-

१ चिरयतेऽद्य. २ सुणिअ तेण भाविदप्पो हसन्तो ( भावितात्मा हसन् ). ३ सुट्ठु एदं पुच्छदि ( भणीअदि )- रज्जन्तित्ति- ४ रायपुत्ति आट्टनाफाका०. २

**मनोरमा**—( स्वगतम् । ) चिरयति खलु महाराजः । किं न कथितं वसन्तकेन । अथवा देव्या बिभेति । यदीदानीमागच्छेत्ततो रमणीयं भवेत् । ( चिराअदि क्खु महाराओ किं ण कहिदं वसन्तएण । अहवा देवीए भाअदि । जइ दाणिं आअच्छे तदो रमणिज्जं हुवे । )

( ततः प्रविशति राजावगुण्ठितशरीरो विदूषकश्च । )

**राजा**—

संतापं प्रथमं तथा न कुरुते शीतांशुरद्यैव मे
निश्वासा ग्लपयन्त्यजस्रमधुनैवोष्णास्तथा नाधरम् ।
संप्रत्येव मनो न शून्यमलसान्यङ्गानि नो पूर्वव-
द्दुःखं याति मनोरथेषु तनुतां संचिन्त्यमानेष्वपि ॥ ५ ॥

वयस्य सत्यमेवोक्तं मनोरमया । यथैषा मम प्रियसखी महाराजस्य देव्या दर्शनपथादपि रक्ष्यते तदयं समागमोपायः । अद्य राज्ञास्माभिरुदयनचरितं नाम नाटकं देव्याः पुरतो नर्तितव्यम् । तत्रारण्यिका वासवदत्ता भविष्यति । अहमपि वत्सराजः । तच्चरितेनैव सर्वं शिक्षितव्यम् । तदागत्य स्वयमेव स्वां भूमिकां कुर्वाणः समागमोत्सवमनुभवत्विति ।

**विदूषकः**—यदि मां न प्रत्याययस्येषा मनोरमा तव वेषं धारयन्ती तिष्ठति । तदुपसृत्य स्वयमेव पृच्छ । ( जइ मं ण पत्तिआअसि एसा मणोरमा तुह वेसं धारअन्ती चिट्ठइ । ता उवसप्पिअ सअं एव पुच्छ । )

**राजा**—( मनोरमामुपसृत्य । ) मनोरमे सत्यमिदं यद्वसन्तकोऽभिधत्ते ।

**मनोरमा**—भर्तः सत्यमेव । मण्डयैतैराभरणैरात्मानम् । ( इत्याभरणान्यङ्गादवतार्य राज्ञे समर्पयति । ) ( भट्टा सच्चं एव्व । मण्डेहि एदेहिं आभरणेहिं अप्पाणं )

( राजा परिदधाति । )

---

**संतापमिति ।** शीतांशुः चन्द्रमा मे मम प्रथमं पूर्वं यथा संतापमकरोत् तथा अद्यैव न कुरुते । तथा उष्णा निश्वासा अधुनैव प्राग्यथा तथा अजस्रमनवरतमधरं न ग्लपयन्ति । सम्प्रत्येव पूर्ववत् मनः न शून्यमङ्गानि च नो नालस्यानि । तथापि मनोरथेषु संचिन्त्यमानेषु सम्पन्नप्राया इति चिन्त्यमानेष्वपि दुःखं मनस्तापः तनुतां याति ह्रस्वीभवति ॥ शार्दूलविक्रीडितं छन्दः ॥ ५ ॥ निभृतेन निगूढम् । उद्देशः प्रथासन्दर्भः । वीणां वादयन् वीणावादनशिक्षणप्रसङ्गेन । मध्यजरागं अनर्पितोऽयमर्थः । पटाक्षेपेण जवनिकामाश्रित्य । आवश्यकप्रवेशसूचनार्थमिदम् ।

**विदूषकः**—एते खलु राजानो दास्योपि एवं नर्त्यन्ते। अहो कार्यस्य गुरुता। ( एदे क्खु राआणो दासीए वि एव्वं णच्चाविअन्ति। अहो कज्जस्स गरुअदा। )

**राजा**—( विहस्य। ) मूर्ख नैष कालः परिहासस्य। निभृतेन चित्रशालां प्रविश्य मनोरमया सहारमभृत्तं पश्यता स्थीयताम्।

( उभौ तथा कुरुतः। )

**आरण्यिका**—काञ्चनमाले तिष्ठतु वीणा। प्रक्ष्यामि तावत्किमपि। ( कञ्चणमाले चिट्ठदु वीणा। पुच्छिस्सं दाव किं वि। )

**राजा**—शृणोमि तावत्कतमोऽयमुद्देशो वर्तते। ( इत्यवहितः शृणोति। )

**काञ्चनमाला**—पृच्छतु भर्तृदारिका। ( पुच्छदु भट्टिदारिआ। )

**आर०**—सत्यमेव तातो मन्त्रयते एवं यथा—यदि वीणां वादयन्नपहरति मां वत्सराजोऽवश्यं बन्धनान्मुञ्चामीति। ( सच्चं एव्व तादो मन्तेदि एव्वं जह जइ वीणं वादअन्तो अवहरेदि मं वच्छराओ अवस्सं बन्धणादो मुञ्चेमित्ति। )

**राजा**—( प्रविश्य पटाक्षेपेण सहर्षं वस्त्रान्ते ग्रथितं बध्नाति। ) एवमेतत्। कः संदेहः।

> सपरिजनं प्रद्योतं विस्मयमुपनीय वादयन्वीणाम्।
> वासवदत्तामपहरामि न चिरादेवेति पश्यामि॥ ६॥

यतः सुसंविहितं सर्वं यौगन्धरायणेन।

**वासवदत्ता**—( सहसोत्थाय। ) जयतु जयत्वार्यपुत्रः। ( जेदु जेदु अज्जउत्तो। )

**राजा**—( स्वगतम्। ) कथं प्रत्यभिज्ञातोऽस्मि देव्या।

**साङ्कृत्यायनी**—( सस्मितम्। ) राजपुत्रि अलमलं संभ्रमेण। प्रेक्षणीयकमेतत्।

ग्रथितं बध्नाति शुभशकुनं दृष्ट्वाऽभिमतसिद्धिसूचनार्थं वस्त्रपल्लवग्रन्थिबन्धनं लोकरीतिः। **सपरिजनमिति**। वीणां वादयन् मनोहारिणा वीणावादनेनेत्यर्थः। प्रद्योतं महासेनं सपरिजनं विस्मयमुपनीय प्रापय्य। वासवदत्तां न चिरादेवापहरामि अपहरिष्यामीति पश्यामि मन्ये। एतदुत्तरार्धं वृत्तलक्षणाननुसारि नातिमनोहरं चेति व्यक्तम्॥ ६॥ सुसंनिहितमिति पाठे सम्यक्संनिधौ स्थापितम्। यौगन्धरायण उदयनस्य प्रधानामात्यः।

१ दासीत्व ( दास्य इव ). २ ग्रन्थिं. ३ ०न्दत्तापहरणमपि; दत्ताहरणं; पश्याम्यहं. ४ सुसंनिहितं.

राजा—( आत्मगतं सहर्षम् ) इदानीमुच्छ्वसितोऽस्मि ।

वासवदत्ता—( सविलक्षस्मितमुपविश्य । ) कथं मनोरमैषा । मया पुनर्ज्ञातमार्यपुत्र एष इति । साधु मनोरमे साधु । शोभनं नर्तितम् । ( कहं मणोरमा एसा । मए उण जाणिदं अज्जउत्तो एसोत्ति । साहु मणोरमे साहु । सोहणं णच्चिदं । )

साङ्कृत्या०—राजपुत्रि स्थान एव कृता भ्रान्तिस्ते मनोरमया । पश्य ।

रूपं तन्नयनोत्सवास्पदमिदं वेषः स एवोज्ज्वलः
सा मत्तद्विरदोचिता गतिरियं तत्सत्त्वमत्यूर्जितम् ।
लीला सैव स एव सान्द्रजलदह्लादानुकारी स्वरः
साक्षाद्दर्शित एष नः कुशलया वत्सेश एवानया ॥ ७ ॥

वासवदत्ता—हञ्जे इन्दीवरिके बद्धेनार्यपुत्रेणाहं वीणां शिक्षिता । तदस्य कुरु नीलोत्पलदामकेन निगडनम् । ( शिरसोऽपनीय नीलोत्पलदामार्पयति । ) ( हञ्जे इन्दीवरिए । बद्धेण अज्जउत्तेण अहं वीणं सिक्खाविदा । ता से करेहि णीलुप्पलदामएण णिअलणम् । )

( इन्दीवरिका तथा कृत्वा पुनस्तत्रैवोपविशति । )

आरण्यिका—काञ्चनमाले कथय कथय । ननु सत्यमेव मन्त्रयते तातो यदि वीणा वादयन्नपहरति मां वत्सराजस्ततोऽवश्यं बन्धनान्मुञ्चामीति । ( कञ्चणमाले कहेहि कहेहि । ण सच्चं एव्व मन्तेदि तादो जइ वीणं वादअन्तो अवहरेदि मं वच्छराओ तदो अवस्सं बन्धणादो मुञ्चेमित्ति । )

काञ्चनमाला—भर्तृदारिके सत्यम् । तथा कुरु यथा वत्सराजस्यावश्यं बहुमता भवसि । ( भट्टिदारिए सच्चं । तह करेहि जह वच्छराअस्स अवस्सं बहुमदा होसि । )

---

रूपमिति । इदं दृश्यमानं गृहीततन्मरान भूमिकाया मनोरमाया नयनानन्दकरं रूपं वत्सराजस्यैव । तदभिन्नमेव । उज्ज्वल वेष स एव । इयमनया प्रकटीकृता मत्तद्विरदस्य मत्तगजस्योचिता तत्सदृशी गतिः सैव । उदयनस्यैव । अत्यूर्जितं अतिमहत् सत्त्वं मनोगाम्भीर्यं धैर्यं वा तदेव । लीला सैव । सान्द्र सजल च जलदस्तस्य ह्लाद स्तनस्तामनुकरोतीति तथा । तन्मधुर । स्वर स एव । एवं कुशलया नाट्यचतुरया अनया एष वत्सेश एव न दर्शित । शार्दूलविक्रीडितं वृत्तम् ॥ ७ ॥

---

१ उच्छ्वसि० . २ रमा मत्त ३ कारिता भ्रान्तिर्मनो०. ४ णिअ० ५ तथेव. ६ सत्यमेव.

**काञ्चनमाला**—( आरण्यिकाया आसनं निर्दिश्य । ) इहैवोपविशतु उपाध्यायः । ( [illegible] एव्व उवविसदु उवज्झाओ । )

**राजा**—( उपविश्य । ) राजपुत्री खेदानीमुपविशतु ।

**काञ्चनमाला**—( सस्मितम् । ) इदानीमेव भर्तृदारिका विद्यामानेन

तदर्हत्येवैवोपाध्यायपीठिकायाः । ( दाणिं एव्व
सिदा तुझेहिं । ता अरुहदि एव्व एसा उवज्झाअपीठिआए।)
इयमर्धासनस्य । राजपुत्रि स्थीयताम् ।
ण्यिका काञ्चनमालां पश्यति । )
सस्मितम् । ) भर्तृदारिके उपविश । कोऽत्र दोषः ।
( भट्टिदारिए उवविस । को एत्थ दोसो । सिस्सविसेस

ण्यिका सलज्जमुपविशति । )
तम् । ) भगवत्याधिकं कल्पितं काव्यम् । न खल्वहं
पुत्रेण सहोपविष्टा । ( भअवदीये अहिअं कप्पिदं
एकासणे अज्जउत्तेण सह उवविट्ठा । )
नः श्रोतुमिच्छामि । वादय वीणाम् ।
स्मितम् । ) काञ्चनमाले चिरं खलु मम वादयन्त्याः
निःसहान्यङ्गानि । तन्न शक्नोमि वादयितुम् ।
अन्तीए परिस्समो जादो । दाणिं णिस्सहाइं अङ्गाइं ।

ध्याय सुट्ठु परिश्रान्ता भर्तृदारिका । कपोलतलबद्धस्वेदलेखायाः पद्मास्या वेपेते अग्रहस्तौ । तत्समाश्वस्ता भवतु मुहूर्तम् । ( उवज्झाअ सुट्ठु परिस्सन्ता भट्टिदारिआ । कवोलतलबद्धसेअलेहाए वेवन्ति से वेवन्ति अग्गहत्था । ता समस्सत्ता होतु मुहुत्तअं । )

**राजा**—काञ्चनमाले युक्तमभिहितम् । ( हस्तेन ग्रहीतुमिच्छति । )

( आरण्यिका हस्तमपसारयति । )

---

अस्मादित्युपाध्यायः । विद्यामानेन गानविद्याप्रावीण्यप्रशंसयेत्यर्थः । कपोलतले बद्धा स्वेदरेखा यस्याः । अग्रौ च तौ हस्तौ च इति कर्मधारयः । हस्ताग्रहस्तयोर्गुणगुणिनो भेदाभेदादिति वामनः ।

---

१ विद्यागुणपरि०-प्रावीण्यद्धिकारि. २ उपविष्टा ( उपविश्यता). ३ सेदकणजालका । ४हस्ते.

**वासवदत्ता**—( सासूयम् । ) भगवति अधिकमेतदपि त्वया कृतम् । न खल्वहं काञ्चनमाला कान्येन वञ्चयितव्या । ( भअवदि अहिअं एदं वि तुए किद । ण हु अअं कञ्चणमाला कण्णेण वञ्चइदव्वा । )

**साङ्कृत्यायनी**—( विहस्य । ) आयुष्मति ईदृशमेव काव्यं भविष्यति ।

**आर०**—( सकोपमिव । ) अपेहि काञ्चनमाले अपेहि । न मे बहुमतासि । ( अवेहि कञ्चणमाले अवेहि । ण मे बहुमदासि । )

**काञ्चन०**—( सस्मितम् । ) यद्यह तिष्ठन्ती न बहुमता तदेषा गच्छामि । ( इति निष्क्रान्ता । ) (जइ अहं चिट्ठन्ती ण बहुमदा ता एसा गच्छामि )

**आर०**—( ससंभ्रमम् । ) काञ्चनमाले तिष्ठ तिष्ठ । अयमस्याग्रहस्तः समर्पित । ( कञ्चणमाले चिट्ठ चिट्ठ । अहं से अग्गहत्थो समप्पिदो । )

**राजा**—( आरण्यिकाया हस्तं गृहीत्वा । )

> **सद्योऽवश्यायबिन्दुव्यतिकरशिशिरः किं भवेत्पद्मकोशो**
> **ह्लादित्वं नास्य मन्ये सदृशमिदमुपस्यैव वीतातपस्य ।**
> **मुञ्चन्त्येते हिमौघं नखरजनिकरा पश्य किं सोऽपि दाही**
> **ज्ञातं स्वेदापदेशादविरतममृतं स्यन्दते व्यक्तमेतत् ॥ ११ ॥**

अपि च ।

> **एतेन बालविद्रुमपल्लवशोभापहारदक्षेण ।**
> **हृदये मम त्वयायं न्यस्तो रागः स्वहस्तेन ॥ १२ ॥**

---

सद्य इति । अय मया गृहीत कर सद्यस्तत्कालस्य अवश्यायबिन्दूनां नीहारकणानां व्यतिकर सम्बन्धस्तेन शिशिर शीतल पद्मकोश कमलमुकुल भवेत्किम् । नैतत्सम्भवतीत्याह । अस्य नीहारकणसनाथस्य पद्ममुकुलस्य अधुनाह्लादित्वमानन्दकारित्वं न मन्ये । यत वीतातपस्य आतपरहितस्य । पीतातपस्येति पाठे गृहीतबालातपस्य । अस्य उपस्यैव सदृश योग्यम् । उपस्यैव पद्ममुकुल आह्लादको भवेदिति भाव । वितर्कान्तरमाह एते पश्य नखरजनिकरा नखचन्द्रा हिमौघं नीहारसंदोह मुञ्चन्ति किम् । नैतदपि । यत सोऽपि रजनिकर दाही विरहिणां दहनशील । न तु सर्वदानन्दकरो ययायम् । तत्किमेतत्स्यादित्यत्र निर्णयमाह—ज्ञातं मया सम्यगवगतम् । एतत् स्वेदापदेशात्स्वेदव्याजेन अमृतम् विरतं स्यन्दते स्रवति । एतत् व्यक्तं स्पष्टमेव । सन्देहापह्नुतिसंकीर्णोत्प्रेक्षा । शार्दूलवि० वृत्तम् । एतेनेति । एतेन बाल य विद्रुमस्य च प्रवालाङ्कुरस्य शोभाया अपहारे मोषणे दक्षेण । अयन्त तत्सदृशेन स्वहस्तेन त्वया मम हृदये अय राग रक्तिमा अनुरागश्च न्यस्तोऽर्पित ॥ १२ ॥

---

१ अहं २ वीता०

**आर०**—( स्पर्शविशेषं नाटयन्ती । ) हा धिक् हा धिक् । एतां मनोरमां स्पृशन्त्या अनर्थमेव मेऽङ्गानि कुर्वन्ति । ( हद्धि हद्धि । एदं मणोरमं परिमसन्तीए अणत्थं एव्व मे अङ्गाइं करेन्ति । )

**वासवदत्ता**—( सहसोत्थाय । ) भगवति पश्य त्वम् । अहं पुनरलीकं न पारयामि प्रेक्षितुम् । ( भअवदि पेक्ख तुमं । अहं उण अलिअं ण पारेमि पेक्खिदुं । )

**साङ्कृत्यायनी**—राजपुत्रि धर्मशास्त्रविहित एष गान्धर्वो विवाहः । किमत्र लज्जास्थानम् । प्रेक्षणीयकमिदम् । तन्न युक्तमस्थाने रसभङ्गं कृत्वा गन्तुम् ।

( वासवदत्ता परिक्रामति । )

**इन्दीवरिका**—( विलोक्य । ) भट्टिनि वसन्तकश्चित्रशालाद्वारे प्रसुप्तस्तिष्ठति । ( भट्टिणि वसन्तओ चित्तसालादुवारे पसुत्तो चिट्ठइ । )

**वासवदत्ता**—( निरूप्य । ) वसन्तक एवैषः । ( विचिन्त्य । ) राज्ञाप्यत्र भवितव्यम् । तद्बोधयित्वा प्रक्ष्यामि तावदेनम् । ( प्रबोधयति । ) ( वसन्तओ एव्व एसो । रण्णा वि एत्थ होदव्वं । ता बोधिअ पुच्छिस्सं दाव णं । )

**विदूषकः**—( निद्राजडमुत्थाय सहसा विलोक्य । ) मनोरमे किं नर्तित्वागतः प्रियवयस्यः । अथवा नृत्यत्येव । ( मणोरमे किं णच्चिअ आअदो पिअवअस्सो । आदु णच्चदि एव्व । )

**वासवदत्ता**—(सविषादम् ।) कथमार्यपुत्रो नृत्यति । मनोरमेदानीं कुत्र । ( कहं अज्जउत्तो णच्चदि । मणोरमा दाणिं कहिं । )

**विदूषकः**—एषा चित्रशालायां तिष्ठति । ( एसा चित्तसालाए चिट्ठइ । )

**मनो०**—(सभयमात्मगतम् ।) कथमन्यथैव हृदये कृत्वा देव्या मन्त्रितम् । एतेनापि मूर्खबटुकेनान्यथैव बुद्ध्वा सर्वमाकुलीकृतम् । ( कहं अण्णहा एव्व

---

अनर्थमिव मेऽङ्गानि कुर्वन्ति कोपि दुःसहो मनोविकारो मेऽङ्गानि प्रज्वलयतीत्यर्थः । विकुर्वंत इति पाठे मदनविकारवशानि भवन्तीत्यर्थः । अलीकमवास्तवम्[१] । गान्धर्वः—तदुक्तं—क्षत्रियस्य ■ गान्धर्वो विवाहः श्रेष्ठ उच्यते । इति । अत्र मनुः—इच्छयान्योन्यसंयोगः कन्यायाश्च वरस्य च । गान्धर्वः स तु विज्ञेयो मैथुन्यः कामसंभवः ॥ इति । अस्थाने अकारणे अनुचिते काले वा । कुत्सितः बटुः बटुकः । कुत्सायां कन् ।

---

१ ० ण्णीए अग्गहत्थेण एव्व विकरन्ति ( न्त्या अग्रहस्तेनैव विकुर्वन्ते ).

हिअए कारिअ देवीए मन्तिदं । एदेण वि मुक्खवडुएण अण्णहा एव्व बुद्धिअ सव्वं आउलीकिदं ।)

**वासवदत्ता**—( सरोषं हसन्ती । ) साधु मनोरमे साधु । शोभनं त्वया नर्तितम् । ( साहु मणोरमे साहु । सोहणं तुए णच्चिदं । )

**मनो०**—( सभय कम्पमाना पादयोर्निपत्य । ) भट्टिनि न खल्वहमपराध्यामि । एतेन खलु हताशेन बलादलंकरणानि गृहीत्वा द्वारस्थितेनेह निरुद्धा । न पुनर्ममाक्रन्दन्त्याः शब्दो मुरजनिर्घोषान्तरितः केनापि श्रुतः । ( भट्टिणि ण हु अहं एत्थ अवरज्झामि । एदेण खु हदासेण बलादो अलंकरणाइं गेण्हिअ दुवारट्ठिदेण इह णिरुद्धा । ण उण मह अक्कन्दन्तीए सद्दो मुरजणिग्घोसन्तरिओ केण वि सुदो । )

**वासवदत्ता**—हञ्जे उत्तिष्ठ । ज्ञातं सर्वम् । वसन्तकः खल्वारण्यिकावृत्तान्तनाटके सूत्रधारः । ( हञ्जे उट्ठेहि । जाणिदं सव्वं । वसन्तओ क्खु आरण्णिआउत्तन्तणाडए सुत्तधारो । )

**विदूषकः**—स्वयमेव चिन्तय । कुत्रारण्यिका कुत्र वसन्तक इति । ( सअं एव्व चिन्तेहि । कहिं आरण्णिआ कहिं वसन्तओत्ति । )

**वासवदत्ता**—मनोरमे सुगृहीतं कृत्वैनमागच्छ तावत् । प्रेक्षणीयमस्य पश्यामि । ( मणोरमे सुग्गहीदं करिअ णं आअच्छ दाव । पेक्खणीअं से पेक्खाम्हि । )

**मनो०**—( स्वगतम् । ) इदानीं समाश्वसितास्मि ( विदूषक करे गृहीत्वा । प्रकाशम् । ) हताश इदानीमनुभवात्मनो दुर्नयस्य फलम् । ( दाणिं समस्ससिदम्हि । हदास दाणिं अणुभव अत्तणो दुण्णअस्स फलं । )

**वासवदत्ता**—( ससंभ्रममुपसृत्य । ) आर्यपुत्र प्रतिहतमेतदमङ्गलम् । ( इति पादयोर्नीलोत्पलदामार्पयन्ती सोत्प्रासम् । ) मर्षत्वार्यपुत्रो यन्मनोरमेति कृत्वा नीलोत्पलदामकेन बन्धितोऽसि । ( अज्जउत्त पडिहदं एदं अमङ्गलं । मरिसदु अज्जउत्तो जं मणोरमेत्ति करिअ णीलुप्पलदामएण बन्धाविदोसि । )

( आरण्यिका सभयमपसृत्य तिष्ठति । )

---

आरण्यिकाया. वृत्तान्तो नृपेण समागम इत्यर्थ । स एव नाटक तत्र सूत्रधारो योजक । सुगृहीतं सुबद्धम् । दुर्नयस्याकुटिलनीते । असमीक्ष्यकारिताया इत्यर्थ । अन्यदन्यथापरिणामि ।

---

१ मुरव( मुरज ( मुरवनि० ), मम आक्रन्दितेषि . अन्तरितो (धान्तरितो ) । न केण वि सद्दो २ आअच्छ । •पेक्ख से पेक्खह्म ३ अपनयति । ४ ( सोत्प्रासं ) मर्षयतु इत्यादि राजा वैलक्ष्य नाटयति " इत्येतस्य पश्चात्तद्यने पुस्तकान्तरे । न इत्यत्र तुर्मे [illegible] पा ध

राजा—( सहसोत्थाय विदूषकं मनोरमां च दृष्ट्वात्मगतम् । ) कथं विज्ञातोऽस्मि देव्या । ( वैलक्ष्यं नाटयति । )

साङ्कृत्यायनी—( सर्वानवलोक्य सस्मितम् । ) कथमन्यदेवेदं प्रेक्षणीयकं संवृत्तम् । अभूमिरियमस्मद्विधानाम् । ( इति निष्क्रान्ता । )

राजा—( स्वगतम् । ) अपूर्वोऽयं कोपप्रकारः । दुर्लभमत्रानुनयं पश्यामि । ( विचिन्त्य । ) एवं तावत्करिष्ये । ( प्रकाशम् । ) देवि त्यज्यतां कोपः ।

वासवदत्ता—आर्यपुत्र कोऽत्र कुपितः । ( अज्जउत्त को एत्थ कुविदो )

राजा—कथं न कुपितासि ।

स्निग्धं यद्यपि वीक्षितं नयनयोस्ताम्रा तथापि द्युति-
माधुर्येऽपि सति स्खलत्यनुपदं ते गद्गदा वागियम् ।
निश्वासा नियता अपि स्तनभरोत्कम्पेन संलक्षिताः
कोपस्ते प्रकटप्रयत्नविधृतोऽप्येष स्फुटं लक्ष्यते ॥ ११ ॥

( पादयोर्निपत्य । ) प्रसीद प्रिये प्रसीद ।

वासवदत्ता—आरण्यिके त्वं कुपितेति संभावयन्नार्यपुत्रः प्रिये प्रसीदेति प्रसादयति । तदुपसर्प । ( इति हस्तेनाकर्षति । ) ( आरण्णिए तुमं कुविदत्ति संभावअन्तो अज्जउत्तो पिए पसीदत्ति पसादअदि । ता उवसप्प । )

आर०—( सभयम् । ) भट्टिनि न खल्वहं किमपि जानामि । ( भट्टिणि ण हु अहं किं वि जाणामि । )

वासवदत्ता—आरण्यिके त्वं कथं न जानासि । इदानीं ते शिक्षयामि । इन्दीवरिके गृहाणैनाम् । ( आरण्णिए तुमं कहं ण आणासि । दाणिं दे सिक्खावेमि । इन्दीवरिए गेण्ह एदं । )

विदूषकः—भवति अद्य कौमुदीमहोत्सवे तव चित्तमपहर्तुं वयस्येन प्रेक्षणीयमनुष्ठितम् । ( होदि अज्ज कोमुदीमहूसवे तुह चित्तं अवहरिदुं वअस्सेण पेक्खणीअं अणुचिट्ठिदं । )

---

स्निग्धमिति । यद्यपि स्निग्धं प्रेमपूर्णं वीक्षितं वीक्षणं तथापि नयनयोः द्युतिः ताम्रा । ताम्रवर्णा कोपात् । माधुर्ये सत्यपि । वाणी मधुरे भाषमाणापि अभीप्सितार्थं० । ते तव गद्गदा अस्फुटं मन्दमिता वागनुपदं पदे पदे स्खलति । निश्वासाः नियता निरुद्धा अपि स्तनयोः उत्कम्पेन संलक्षिताः स्फुटं दृश्याः । एवमेव ते कोपः प्रकटेन स्फुटेन प्रयत्नेन निरोधितोऽपि स्फुटं प्रकटं लक्ष्यते । शार्दूल० वृत्तम् ॥ ११ ॥ तव चित्तमपहर्तुं तव रञ्जनार्थमित्यर्थः ।

---

१ स्तनभरोत्थ कथित. २ वयस्य.

वासवदत्ता—एतं युष्माकं दुर्नयं प्रेक्ष्य हासो मे जायते । ( एदं तुह्माणं दुण्णअं पेक्खिअ हासो मे जाअदि । )

राजा—देवि अलमन्यथा विकल्पितेन । पश्य ।

भ्रूभङ्गः क्रियते ललाटशशिनः कस्मात्कलङ्को मुधा
वाताकम्पितबन्धुजीवसमतां नीतोऽधरः किं स्फुरन् ।
मध्यश्चाधिककम्पितस्तनभरेणायं पुनः खिद्यते
कोपं मुञ्च तवैव चित्तहरणायैतन्मया क्रीडितम् ॥ १४ ॥

देवि प्रसीद प्रसीद । ( इति पादयोः पतति । )

वासवदत्ता—हञ्जे निवृत्तं प्रेक्षणकम् । तदेहि । अभ्यन्तरमेव प्रविशावः । ( इति निष्क्रान्ता । ) ( हञ्जे णिवुत्तं पेक्खणअं । ता एहि । अब्भन्तरं एव्व पविसह्म । )

इति गर्भनाटकम् ।

राजा—( विलोक्य । ) कथमकृत्वैव प्रसादं गता देवी ।

स्वेदाम्भःकणभिन्नभीषणतरभ्रूभङ्गमेकं तथा
त्रासेनापरमुत्प्लुतोत्प्लुतमृगव्यालोलनेत्रोत्पलम् ।
उत्पश्यन्नहमग्रतो मुखमिदं देव्याः प्रियायास्तथा
भीतश्चोत्सुकमानसश्च महति क्षिप्तोऽस्म्यहं संकटे ॥ १५ ॥

तद्यावदिदानीं शयनीयं गत्वा देव्याः प्रसादनोपायं चिन्तयामि ।

( इति निष्क्रान्ताः सर्वे । )

इति तृतीयोऽङ्कः ।

---

अन्यथाविकल्पितेन अहमारण्यिकायामासक्त इत्यादिसंशयेन । भ्रूभङ्ग इति । कस्मात्केन हेतुना ललाटमेव शशी तस्य भ्रूभङ्गैः कोपजनितभ्रूविकारैः मुधा व्यर्थमकारणमिति यावत् । कलङ्कः क्रियते । ललाटशशी मलिनीक्रियते इत्यर्थः । [illegible] किमर्थं स्फुरन् कोपात्कम्पमानः अधरः वातेनाकम्पितं यद्बन्धुजीवकुसुमं तस्य समतां तुल्यतां नीतः । कस्मात्पुनः अयं मध्यः अधिकं चलवत्कम्पितौ यौ स्तनौ तयोः भरेण खिद्यते खेदं प्राप्यते । कोपं मुञ्च यतो मया तव चित्तहरणायैवैतद् क्रीडितम् । शार्दूलविक्रीडितं वृत्तम् ॥ १४ ॥

स्वेदाम्भः इति । एकं क्रोधेन हेतुभूतेन उत्पन्ना ये स्वेदाम्भःकणा घर्मजलबिन्दवस्तैः भिन्नं चितं च तत् भीषणतरा अतिशयेन भीषणा तथा भ्रूभङ्गा यत्र तादृक् च इदं पुरोदृश्यमानं देव्या मुखमेकम् । त्रासेन भयेन उत्प्लुतोत्प्लुतो वेगोद्गमं धावन्यो मृगस्तस्येव व्यालोले अतिचपले नेत्रोत्पले नेत्रकमले यस्य तादृक् प्रियाया आरण्यिकाया इदमपरं मुखमग्रत उत्पश्यन् विभावयन् अहं भीतश्च उत्सुकमानसश्च सन्महति संकटे क्षिप्तोऽस्मि । शार्दूल० वृत्तम् ॥ १५ ॥ इति तृतीयोऽङ्कः ।

---

१ विकल्पनेन. २ अधुना. ३ वेदं. ४ पुन० पा. ५ निष्क्रान्ताः सौपर्णो विदूषकश्च. ६ मृगी.

## ॥ चतुर्थोऽङ्कः ॥

( ततः प्रविशति मनोरमा )

**मनोरमा**—( सोद्वेगम् । ) अहो दीर्घरोषता देव्याः । एतावन्तं कालं बद्धाया अपि प्रियसख्या आरण्यिकाया उपर्यनुकम्पां न गृह्णाति । सा तपस्विन्यात्मनो बन्धनस्य क्लेशेन तथा न संतप्यते यथा भर्तुर्दर्शननिराशतया । ईदृशं चास्या दुःखं येनाद्यैवात्मानं व्यापादयन्ती मया कथमपि निवारिता । एतं वृत्तान्तं भर्त्रे निवेदयेति वसन्तकं भणित्वागतास्मि । ( अहो दिग्घरोसदा देवीए । एत्तिअं कालं बद्धाए पिअसहीए आरण्णिआए उवरि अणुकम्पं ण गेण्हइ । मा तवस्सिणी अत्तणो बन्धणस्स किलेसेण तह ण संतप्पदि जह भट्टिणो दंसणणिरासदाए । ईरिसं च से दुक्खं जेण अज्ज एव्व अत्ताणं वावादअन्ती मए कहं वि णिवारिदा । एदं वुत्तन्तं भट्टिणो णिवेदेहित्ति वसन्तअं भणिअ आअदह्मि । )

( ततः प्रविशति काञ्चनमाला । )

**काञ्चनमाला**—कथमन्विष्यन्त्यापि मया भगवती साङ्कृत्यायनी न दृष्टा । ( विलोक्य । ) तदेतामपि तावन्मनोरमां प्रक्ष्यामि । ( उपसृत्य । ) मनोरमे अपि जानासि कुत्र भगवती साङ्कृत्यायनीति । ( कहं अण्णेसन्तीए वि मए भअवदी सङ्किच्चाअणी ण दिट्ठा । ता एदं वि दाव मणोरमं पुच्छिस्सं । मणोरमे अवि जाणासि कहिं भअवदी सङ्किच्चाअणित्ति । )

**मनोरमा**—( विलोक्याश्रूणि प्रमृज्य । ) हला काञ्चनमाले दृष्टा । किं पुनस्तया प्रयोजनम् । ( हला कञ्चणमाले दिट्ठा । किं उण ताए पओअणं । )

**काञ्चनमाला**—मनोरमे अद्य देव्याङ्गारवत्या लेखः प्रेषितः । तस्मिन्वाचिते बाष्पपूर्णनयना दृढं संतप्तुमारब्धा देवी । तद्विनोदननिमित्तं तस्या भगवतीमन्विष्यामि । ( मणोरमे अज्ज देवीए अङ्गारवदीए लेहो पेसिदो[3] । तस्सिं वाचिदे बप्फपुण्णणअणा दिढं संतप्पिदुं आरद्धा देवी । ता विणोदणणिमित्तं ताए भअवदिं अण्णेसामि । )

---

अथ चतुर्थाङ्के अवशिष्टे अवमर्शनिर्वहणसन्धी निर्दिश्येते । तत्र निष्क्रान्ता मनोरमा ततः प्रविशति मनोरमया धृता सनिर्वेदमात्मानं नाटयन्ती आरण्यिका एत्येतावपर्यन्तं वासवदत्ताप्रगल्भा निरपायप्रियदर्शिकाप्राप्त्यवगमात्माऽवमर्शसंधिः । अथ वासवदत्ताप्रसादमिच्छतो वत्सराजस्य प्रवेशं सूचयितुं प्रवेशकमारभते ततः प्रविशति मनोरमेति । तपस्विन्यनुकम्पार्हा । अङ्गारवती प्रद्योतस्य पत्नी वासवदत्तायाः माता । तद्विनोदननिमित्तं तस्या दुःखस्यापमार्जनार्थमन्विष्यः ।

---

१ कहं ?जिअ. २ दिट्ठा ताए किं पओ०. ३ अणुप्पेसिदो.

**मनोरमा**—हला किं पुनस्तस्मिँल्लेख आलिखितम्। (हला किं उण तस्सिं लेहे आलिहिदं।)

**काञ्चनमाला**—या मम भगिनी सा तव जनन्येव। तस्या भर्ता दृढवर्मा तातस्ते। तत्तव किमेतदास्यातव्यम्। तस्य समधिकं संवत्सरं कलिङ्गहतकेन बद्धस्य। तन्न युक्तमेतं वृत्तान्तमनिष्टं श्रुत्वा समीपस्थितस्य समर्थस्य भर्तुस्त एवमुदासीनत्वमवलम्बितुमिति। (जा मह भइणी सा तव जणणी एव्व। ताए भत्ता दिढवम्मा तादो दे। ता तव किं एदं आअक्खिदव्वं। तस्स समहिअं संवच्छरं कलिङ्गहदएण बद्धस्स। ता ण जुत्तं एदं उत्तन्तं अणिट्ठं सुणिअ समीवट्ठिदस्स समत्थस्स भत्तुणो दे एव्वं उदासीणत्तण ओलम्बिदुत्ति।)

**मनोरमा**—हला काञ्चनमाले। यदा तावदयं वृत्तान्तो भट्टिन्यै न केनापि विज्ञापितव्य इति भर्त्राज्ञप्तं तत्केन पुनरिदानीं स लेखः [illegible]। (हला कञ्चणमाले जदा दाव अअं उत्तन्तो भट्टिणीए ण केण वि [illegible] भट्टिणा आणत्तं ता केण उण दाणिं सो लेहो जुण्णविदो।)

**काञ्चनमाला**—अनुवाच्य तूष्णींभूताया मम हस्त[illegible]मेव भट्टिन्या वाचितः। (अणुवाइअ तुह्णीभूदाए मह [illegible] भट्टिणीए वाइदो।)

**मनोरमा**—तेन गच्छ त्वम्। एषा खलु देवी [illegible]लभ्यां तिष्ठति। (तेण गच्छ तुमं। एसा क्खु देवी [illegible]हीए चिट्ठइ।)

**काञ्चनमाला**—तेन हि भट्टिनीसकाशं [illegible]न्ता।) (तेण हि भट्टिणीसआसं गमिस्सं।)

**मनोरमा**—चिरं खलु म[illegible] निर्विण्णा सा तपस्विन्यात्मनो जीवितेन। [illegible] तत्तत्रैव गच्छामि। (इति निष्क्रान्ता।) (चिरं [illegible] आअदाए। दिट्ठं च णिव्विण्णा सा तवस्सिणी अत्तणो जीवि[illegible] भे। ता तहिं एव्व गच्छम्हि।)

(इति प्रवेशकः।)

समर्थस्य प्रभावतः। दन्तवलभी हस्तिदन्त[illegible] चिता [illegible] महागीतिरनियमितार्थं। प्रवेशक तद्देवानुदात्तोक्त्या

१ भइणिआ. २ जुत्तं अनापाक्खिअ समीव॰ ( ( मत॰ ). ४ पाइदुलो ( वाचयिमल्पा ). ५ ना ( तत ).

( ततः प्रविशति सोद्वेगासनस्था वासवदत्ता साङ्कृत्यायनी विभवतश्च परिवारः। )

साङ्कृत्यायनी—राजपुत्रि अलमुद्वेगेन । नेदृशो वत्सराजः। कथमित्थंगतमपि भवत्या मातृष्वसृपतिं विज्ञाय वत्सराजो निश्चिन्तं स्थास्यति।

वासवदत्ता—( सास्रम्। ) भगवति अतिऋजुकेदानीं त्वम्। यस्य मया न कार्यं तस्य मदीयेन किं कार्यम्। मातृयुक्तं ममैतदालिखितुम्। सा पुनर्न जानात्यद्यापि तादृशी न वासवदत्तेति। तव पुनरेष आरण्यिकावृत्तान्तः प्रत्यक्षः। तत्कथमेतद्भणसि। ( भअवदि अदिउज्जुआ दाणिं तुमं। जस्स मए ण कज्जं तस्स ममकेरएण किं कज्जं। अज्जुआए जुत्तं मम एदं आलिहिदुं। सा उण ण आणादि अज्जवि तारिसी ण वासवदत्तेति। तुह उण एदं आरण्णिआए उत्तन्तं पच्चक्खं। ता कहं एदं भणासि। )

साङ्कृत्यायनी—यत एव मे प्रत्यक्षं तत एव ब्रवीमि। तेन ननु कौमुदीमहोत्सवे त्वां हासयितुं तथा क्रीडितम्।

वासवदत्ता—भगवति एतदत्र सत्यम्। तथा हासितास्मि येन भगवत्याः पुरतो लज्जया कथमपि तिष्ठामि। तत्किं तदीयया कथया। नन्वनेनैव पक्षपातेनैतावतीं भूमिं नीतास्मि। ( इति रोदिति। ) ( भअवदि एदं एव्व सच्चं। तह हासिदह्मि जेण भअवदीए पुरदो लज्जाए कहं वि चिट्ठामि। ता किं तकेरकाए कहाए। णं एदेण एव्व पक्खवादेण एत्तिअं भूमिं णीदह्मि। )

साङ्कृत्यायनी—अलं राजपुत्रि रुदितेन। नेदृशो वत्सराजः। ( विलोक्य। ) अथवा प्राप्त एवायं यस्ते मन्युप्रमार्जनं करोति।

वासवदत्ता—मनोरथा इदानीमेते भगवत्याः। ( मणोरहा दाणिं एदे भअवदीए। )

( ततः प्रविशति राजा विदूषकश्च। )

राजा—वयस्य क इदानीमभ्युपायः प्रियां तोषयितुम्।

विदूषकः—भो वयस्य मुञ्च विषादम्। अहं ॥ उपायं कथयिष्यामि। ( भो वअस्स मुञ्च विसादं। अहं दे उवाअं कहइस्सं। )

---

क्रोशोद्विग्नमनाले [illegible] ॥ हृदी । अतिऋजुका [illegible] [illegible] । [illegible] । मया न कार्यं [illegible] [illegible] [illegible] । आरण्यिका मन्यतु । तादृशी [illegible] । [illegible] [illegible] । [illegible] [illegible] ।

---

१ [illegible] २ [illegible]—[illegible] ( [illegible] ) [illegible]. ३ [illegible].

राजा—( सहर्षम् । ) वयस्य त्वरिततरमभिधीयताम् ।

विदूषकः—भो त्वं तावदनेकसमरसंघट्टप्रभावबाहुशाली । पुनरप्य-नेकगजतुरगपदातिदुर्विषहबलसमुदितः । तत्सर्वबलसंदोहेनान्तःपुरं सुपीडितं कृत्वेदानीमेवारण्यिकां मोचय । ( भो तुम दाव अणेअसमरसंघट्टपहाववाहुसाली । पुणो वि अणेअगअतुरअपआइदुव्विसहबलसमुदिदो । ता सव्वबलसंदोहेण अन्तेउरं सुपीडिअ करिअ दाणिं एव्व आरण्णिअं मोआवेहि । )

राजा—वयस्य अशक्यमुपदिष्टम् ।

विदूषकः—किमत्राशक्यम् । यतस्तावत्कुब्जवामनवृद्धकञ्चुकि-वर्जितो मनुष्योऽपरो नास्ति तत्र । ( किं एत्थ असक्कं । जदो दाव कुज्जवामण वुड्ढकञ्चुइवज्जिदो मणुस्सो अवरो णत्थि तहिं । )

राजा—( साक्षम् ) मूर्ख किमसंबद्धं प्रलपसि । देव्याः प्रसादं मुक्त्वा नान्यस्तस्या मोक्षणाभ्युपायः । तत्कथय कथं देवीं प्रसादयामि ।

विदूषकः—भो मासोपवासं कृत्वा जीवितं धारय । एवं देवी चण्डी प्रसत्स्यति । ( भो मासोववासं करिअ जीविदं धारेहि । एव्वं देवी चण्डी पसीदिस्सदि । )

राजा—( विहस्य । ) अलं परिहासेन । कथय कथं देवीं प्रसादयामि ।

धृष्टः किं पुरतोऽवरुध्य विहसन्गृह्णामि कण्ठे प्रियां
किं वा चाटुशतप्रपञ्चरचनामीतां करिष्यामि ताम् ।
किं तिष्ठामि कृताञ्जलिर्निपतितो देव्याः पुरः पादयोः
सत्यं सत्यमहो न चेदनुनयो देव्याः कथं स्यादिति ॥१॥

अनेके ये [illegible] समरा [illegible] प्रभाव [illegible] बाहुभ्यां शालतेऽसौ । पाठान्तरे अनेकसमरसंघट्टेषु ये प्रहाराः [illegible] [illegible] । [illegible] पदात [illegible] ते दुर्विषहं [illegible] तेन समुदितः युक्तः [illegible] । [illegible] । कुब्जाः [illegible] । [illegible] दुर्लभं [illegible] । धृष्ट इति । [illegible] पुरतः [illegible] । [illegible] किं वा चाटूनां [illegible] करिष्यामि ।

[illegible]

तदेहि । देवीसकाशमेव गच्छावः ।

विदूषकः—भोः गच्छ त्वम् । अहं पुनरिदानीमेव बन्धनात्कथमपि परिभ्रश्यागतोऽस्मि । तत्र गमिष्यामि । ( भो गच्छ तुमं । अहं दाणिं एव्व बन्धणादो कहं वि परिब्भंसिअ आअदोह्मि । सो ण गमिस्सं । )

राजा—( विहस्य कण्ठे गृहीत्वा बलान्निवर्तयति । ) मूर्ख आगम्यतामागम्यताम् । ( परिक्रम्यावलोक्य च । ) इयं देवी दन्तवलभीमध्यमध्यास्ते । यावदुपसर्पामि । ( सलज्जमुपसर्पति । )

( वासवदत्ता सखेदमासनादुत्तिष्ठति । )

राजा—

किं मुक्तमासनमलं मयि संभ्रमेण
नोत्थातुमित्यनुचितं मम तान्तमध्ये ।
दृष्टिप्रसादविधिनैव हतोऽयमत्यादरेण किमिति क्रियते विलक्षः ॥ २ ॥

वासवदत्ता—( मुखं निरूप्य । ) आर्यपुत्र विलक्ष इदानीं त्वं भवसि । ( अज्जउत्त विलक्खो दाणिं तुमं होसि । )

राजा—प्रिये सत्यमहं विलक्षः । यत्प्रत्यक्षदृष्टापराधोऽपि भवतीं प्रसादयितुं व्यवसितोऽस्मि ।

साङ्कृत्यायनी—( आसनं निर्दिश्य । ) महाराज क्रियतामासनपरिग्रहः ।

राजा—( आसनं निर्दिश्य । ) इत इतो देव्युपविशतु ।

( वासवदत्ता भूमावुपविशति । )

राजा—आः कथं भूमावुपविष्टा देवी । अहमप्यत्रैवोपविशामि । ( इति भूमावुपविश्य कृताञ्जलिः । ) प्रिये प्रसीद प्रसीद । किमेवं प्रणतेऽपि मयि गम्भीरतरं कोपमुद्वहसि ।

---

स्थित्वा देव्याः पुरः पादयोर्निपतन् तिष्ठामि । देव्याः प्रसादने प्रतिपत्तिमूढः अहं सत्यं सत्यं देव्या अनुनयः कथं स्यादिति न वेद्मि । शार्दूलवि० वृत्तम् ॥ १ ॥ किं मुक्तमिति । किं किमर्थमासनं मुक्तम् । मयि सम्भ्रमेण उपचारत्वरया अलम् । सम्भ्रमो मास्तु । हे तान्तमध्ये तान्तः कृशतरो मध्यो यस्यास्तत्संबुद्धौ । इत्थमुत्थातुं नोचितम् । दृष्टिः मयि दृष्टिपात एव प्रसादस्तस्य विधिना करणेनैव केवलेन हतः आत्मपराधीनोऽयं जनः । अहमित्यर्थः । अत्यादरेणातिसम्मानदर्शनेनेत्यर्थः । किमिति विलक्षः सलज्जः क्रियते । वसन्ततिलकं वृत्तम् ॥ २ ॥ निरूप्य निपुणं दृष्ट्वा । गम्भीरतरमत्यारूढं महता यत्नेनापनेयमित्यर्थः ।

---

१ ना गमि०. २ अ.भक्कारने. ३ दन्तवलभि पुस्तकान्तरे. ४ गभीर.

भ्रूभङ्गं न करोषि रोदिषि मुहुर्मुग्धेक्षणे केवलं
　नातिप्रस्फुरिताधरानवरतं निःश्वासमेवोज्झसि ।
वाचं नापि ददासि तिष्ठसि परं ध्यानानताम्रानना
　कोपस्ते स्तिमितो निपीडयति मां गूढप्रहारोपमः ॥ ३ ॥

प्रिये प्रसीद प्रसीद । ( इति पादयोः पतति । )

वासवदत्ता—अतिसुखितो न्वसि । किमिदानीं दुःखितं जनं विचारयसि । उत्तिष्ठ कोऽत्र कुपितः । ( अदिसुहिदो ण सि । किं दाणिं दुक्खिदं जणं विआरेसि । उट्ठेहि को एत्थ कुविदो । )

साङ्कृत्यायनी—उत्तिष्ठ महाराज । किमनेन । अन्यदेव तावदुद्वेगकारणमस्याः ।

राजा—( ससंभ्रमम् । ) भगवति किमन्यत् ।

( साङ्कृत्यायनी कर्णे कथयति । )

राजा—( विहस्य । ) यद्येवमलमुद्वेगेन । मयापि ज्ञातम् । सिद्ध एवास्मिन्प्रयोजने देवीं तु दिष्ट्या वर्धयिष्यामीति नोक्तम् । अन्यथा कथमहमेवंवृत्तान्ते विलम्बयिष्यामि । कतिपयान्यहानि तद्वार्तया आगतायाः । इदं च तत्र वर्तते ।

अस्मद्बलैर्विजयसेनपुरःसरैस्तै-
　राक्रान्तबाह्यविषयो विहतप्रतापः ।
दुर्गं कलिङ्गहतकः सहसा प्रविश्य
　प्राकारमात्रशरणोऽशरणः कृतोऽसौ ॥ ४ ॥

---

भ्रूभङ्गमिति । हे मुग्धेक्षणे मनोहरनयने । यद्यपि मयि भ्रूभङ्गं न करोषि । सरोषं भ्रुकुटिं न बध्नासि । केवलं मुहुः रोदिषि । नातिप्रस्फुरितोऽधरो यस्मिन् तादृशं अनवरतं सततं निःश्वासमेव उज्झसि मुञ्चसि । वाचमपि न ददासि परं प्रचुरं ध्यानेन प्रकृष्टचिन्तया नम्रमवनतमाननं यस्याः तथासि । एवं स्तिमितः बहिरदृश्यमानाकारस्तव कोपः गूढः प्रहारस्तदुपमा यस्य तथाभूतः सन् मां निपीडयति क्लेशयतितराम् । शार्दूलवि० वृत्तम् ॥ ३ ॥ अतिसुखित इति सोपालम्भम् । सिद्ध एवेति अस्मिन्नर्थे कार्यसिद्धिरेवास्मि । देवीं तु वर्धयिष्यामीति मम । एवंवृत्तान्ते एतस्मिन्नापद्गते इत्यर्थः । अस्मद्बलैरिति । तैः प्रसिद्धैः विजयसेनः पुरोगो येषां तैः अस्मद्बलैः आक्रान्तो व्याप्तो बाह्यो विषयो यस्य सः । विहतः प्रतापो यस्य सः च तयोक्तः । असौ कलिङ्गश्चासौ हतकश्च कलिङ्गहतकः अशरणः अगाधः सन् सहसा दुर्गं प्रविश्य । स्थित इति शेषोऽन्यथा व्यवस्थितः । प्राकारमात्रं शरणं रक्षिता यस्य तथा कृतः । वसन्ततिलकं

---

१ तोषयी० २ उत्तिष्ठ उत्तिष्ठ ३ देवीं तुम्या ४ च किम् वर्णनेन ।

वृत्तां च तं —

दिष्टाक्रान्तमन्दं प्रतिदिनविरमद्वीरदासेरवृत्ते
शश्वत्संशीर्यमाणद्विपतुरगनरक्षीणनिःशेषसैन्यम् ।
श्व श्वो वा विमर्दे झटिति मम बलैः सर्वतस्तत्र दुर्गे सति
बद्धं युद्धे हतं वा भगवति न चिराच्छ्रोष्यसि त्वं कलिङ्गम् ॥ ५ ॥

साङ्कृत्यायनी—राजपुत्रि प्रथमतरमेव भवत्याः कथितं मया स्यमप्रतिविधाय वत्सराजः स्थास्यतीति ।

वासवदत्ता—यद्येवं प्रियं मे । ( जइ एव्वं पिअं मे । )

( प्रविश्य । )

प्रतीहारी—जयतु जयतु भर्ता । एष खलु विजयसेनो दृढवर्मकञ्चुकिसहितो हर्षसमुत्फुल्ललोचनः प्रियं निवेदयितुकामो द्वारे तिष्ठति । ( जेदु जेदु भट्टा । एसो क्खु विअअसेणो दिढवम्मकञ्चुइसहिदो हरिससमुप्फुल्ललोअणो पिअं णिवेदिदुकामो दुवारे चिट्ठइ । )

वासवदत्ता—( सस्मितम् । ) भगवति यथा तर्कयामि परितोषितास्म्यार्यपुत्रेणेति । ( भअवदि जह तक्केमि परिदोसिदह्मि अज्जउत्तेणेत्ति । )

साङ्कृत्यायनी—वत्सराजपक्षपातिनी खल्वहं न किंचिदपि ब्रवीमि ।

राजा—शीघ्रं प्रवेशय तौ ।

प्रतीहारी—तथा । ( इति निष्क्रान्ता । ) तह ।

( ततः प्रविशति विजयसेनः कञ्चुकी च । )

विजयसेनः—भोः कञ्चुकिन् । अद्य स्वामिपादा द्रष्टव्या इति यत्सत्यमनुपमं कमपि सुखातिशयमनुभवामि ।

---

वृत्तम् ॥ ४ ॥ निर्दिष्टेत्यादि । हे भगवति साङ्कृत्यायनीमुद्दिश्येनम् । अद्य श्वो वा मम बलैः तत्र तस्मिन् दुर्गे झटिति शीघ्रं सर्वतः विमर्दे विध्वस्ते त्वं कलिङ्ग कलिङ्गराजमचिरादेव युद्धे बद्धं हतं वा श्रोष्यसि । कथंभूतमित्याह । निर्दिष्टेनोपरिकथितेन आक्रान्तेन अभियोगेन मन्दं निरुत्साहं । निर्दिष्टाक्रन्दमन्देति पाठे निर्दिष्टे य आक्रन्दो दारुणो रणः । आक्रन्दो दारुणे रणे इत्यमरः । प्रतिदिनं दिने दिने विरमत् क्षीयमाणं वीराणां दासेराणां किंकराणां च । भृत्ये दासेरदासौ च इत्यमरः । वृत्तं युद्धादिव्यापारो यस्य तम् । शश्वदजस्रं शीर्यमाणा ध्वस्यमाना द्विपा गजाः तुरगा नरा योधाश्च यस्मिन् । अतः क्षीणं निःशेषं बलं सैन्यं यस्य तम् । स्रग्धरा वृत्तम् ॥ ५ ॥ वत्सराजपक्षपातिनी एतेनैव पक्षपातेनेत्यादि वासवदत्तावचनं मनसि कुर्वन्त्याः सोत्प्रासोक्तिरियम् ।

---

१ दृढवर्म. २ सप्रसं. ३ चापि.

**कञ्चुकी**—विजयसेनैं अवितथमेतत् । पश्य ।

सुखनिर्भरोऽन्यथापि स्वामिनमवलोक्य भवति भृत्यजन ।
किं पुनरखिलविघटननिर्व्यूढप्रभुनियोगभर ॥ ६ ॥

**उभौ**—( उपसृत्य । ) जयतु जयतु स्वामी ।

( राजा उभावपि परिष्वजते । )

**कञ्चुकी**—देव दिष्ट्या वर्धसे ।

हत्वा कलिङ्गहतक दृढवर्मास्वामी निवेशितो राज्ये ।
देवस्य समादेशो निर्व्यूढो विजयसेनेन ॥ ७ ॥

**वासवदत्ता**—अयि भगवति अभिजानास्येतं कञ्चुकिनम् । ( अइ भअवइ अहिजाणासि एदं कञ्चुइं । )

**साङ्कृत्यायनी**—कथं नाभिजानामि । ननु स एष यस्य हस्ते मातृष्वसा ते पत्रिकामनुप्रेषितवती ।

**राजा**—साधु विजयसेनेन महान्व्यापारोऽनुष्ठित ।

( विजयसेन पादयो पतति । )

**राजा**—देवि दिष्ट्या वर्धसे । प्रतिष्ठितो राज्ये दृढवर्मा ।

**वासवदत्ता**—( सहर्षम् । ) अनुगृहीतास्मि । ( अणुग्गहिदह्मि । )

**विदूषकः**—ईदृशेऽभ्युदयेऽस्मिन्राजकुल एतत्करणीयम् । ( राजानं निर्दिश्य वीणावादनं नाटयन् । ) गुरुपूजा । ( आत्मनो यज्ञोपवीतं दर्शयन् । ) ब्राह्मणस्य सत्कार । ( आरण्यिकं सूचयन् । ) सर्वबन्धनमोक्ष इति । ( ईदिसे अब्भुदए अस्सिं राअउले एदं करणिज्जं । गुरुपूआ । बह्मणस्स सक्कारो । सव्वबन्धणमोक्खो त्ति । )

**राजा**—( वासवदत्ताभरणार्थं छोटिकां ददत् । ) साधु वयस्य साधु ।

---

अवितथं सत्यम् । सुखेति । अन्यथापि महत्प्रभुकार्यकरणाभावेऽपि स्वामिनमवलोक्य भृत्यजन सुखेन निर्भर नितरां पूर्णो भवति । किं पुन अखिलस्य विघटनेन ध्वंसेनेति यावत् निर्व्यूढ सम्पादित प्रभोर्नियोगस्य निर्दिष्टकार्यस्य भर येन स । सुखनिर्भरो भवेदिति वक्तव्यमित्यर्थ ॥ ६ ॥ हत्वेति । विजयसेनेन कलिङ्गहतकं हत्वा अस्मत्स्वामी राज्ये निवेशितः प्रतिष्ठापितो हि । देवस्य समादेश निर्व्यूढ सम्पादित च ॥ ७ ॥ अभ्युदये इत्यस्मात्प्रागेवेत्यागमम् । गुरुपूजा इत्यर्थनिर्देशेन सत्कार । छोटिका अङ्गुष्ठमध्यमयोर्योगेन संघर्षजन्यो ध्वनिविशेष ।

---

१ एतस्मात्पूर्वं पुस्तकान्तरे २ सोऽस्मत् अस्मत्स्वामिनि निवेशिते ३ कथञ्चिदत्र दशापद्विप्रकार्षिता ४ कलिङ्गक-पुरुष ५ महान् ६ अस्मादनन्तरं जयतु भावान् ( जेदु अय्य वुत्तो ) इत्यधिकं पुस्तकान्तरे

**विदूषकः**—भवति कथं त्वं न किमप्यत्र समादिशसि । ( होदि कहं तुमं ण किं वि एत्थ समादिससि । )

**वासवदत्ता**—( साङ्कृत्यायनीमवलोक्य सस्मितम् । ) मोचिता खलु हताशेनारण्यिका । ( मोइदा क्खु हदासेण आरण्णिआ । )

**साङ्कृत्यायनी**—किं वा तपस्विन्यानया बद्धया ।

**वासवदत्ता**—यथा भगवत्यै रोचते । ( जह भअवदीए रोअदि । )

**साङ्कृत्यायनी**—यथेममहमेवै गत्वा तां मोचयिष्यामि । ( इति निष्क्रान्ता । )

**कञ्चुकी**—इदमपरं संदिष्टं महाराजेन दृढवर्मणा । त्वत्प्रसादात्सर्वमेव यथाभिलषितं संपन्नम् । तदेते प्राणास्त्वदीयाः । यथेष्टमिमान्विनियोक्तुं त्वमेव प्रमाणमिति ।

( *राजा सलज्जमधोमुखास्तिष्ठति ।* )

**विजयसेनः**—देव न शक्यमेव देवं प्रति प्रीतिविशेषं दृढवर्मणः कथयितुम् ।

**कञ्चुकी**—यद्यपि तुभ्यं प्रतिपादितायाः प्रियदर्शिकाया अस्मद्दुहितुः परिभ्रंशान्न मे संबन्धो जात इति दुःखमासीत्तथापि वासवदत्तायाः परिणेत्रापि त्वया तदपनीतमेव ।

**वासवदत्ता**—( सास्रम् । ) आर्य कञ्चुकिन् कथं मे भगिनी परिभ्रष्टा । ( अज्ज कञ्चुइ कहं मे भइणी परिब्भट्ठा । )

**कञ्चुकी**—राजपुत्रि तस्मिन्कलिङ्गहतकावस्कन्दे विद्रुतेष्वितस्ततोऽन्तःपुरजनेषु दिष्ट्या दृष्टामिदानीं न युक्तमत्र स्थातुमिति तामहं गृहीत्वा वत्सराजान्तिकं प्रस्थितः । ततः संचिन्त्य तां विन्ध्यकेतोर्हस्ते निक्षिप्य निर्गतोऽस्मि । यावत्प्रतीपमागच्छामि तावत्कैरपि तत्स्थानं सह विन्ध्यकेतुना स्मर्तव्यतां नीतम् ।

---

प्रतिपादितायाः संकल्पदत्तायाः । परिभ्रंशात्स्वस्थानात्स्खलनाद्विनाशाद्वा । कलिङ्गहतकस्यावस्कन्दः अभिद्रवः तस्मिन् । दिष्ट्या सुदैवात् । संचिन्त्य कार्ययुक्तता विचार्य । प्रतीपमागच्छामि परावर्तामि ।

---

१ मेव तावन्मोचयामि. २ शक्यते प्रीतिविशेष-.

**राजा**—( सस्मितम् । ) विजयसेन किं कथयसि ।

**कञ्चुकी**—तत्र चान्विष्यता मया न प्राप्ता । तदाप्रभृति नाद्यापि विज्ञायते क्व वर्तत इति ।

( प्रविश्य मनोरमा । )

**मनोरमा**—भट्टिनि प्राणसंशये वर्तते सा तपस्विनी । ( भट्टिणी पाणसंसए वट्टइ सा तवस्सिणी । )

**वासवदत्ता**—( सास्रम् । ) किं पुनस्त्वं प्रियदर्शनावृत्तान्तं जानासि । ( किं उण तुमं पिअदसणाउत्तन्तं आणासि । )

**मनोरमा**—न खल्वहं प्रियदर्शनावृत्तान्तं जानामि । एषा खल्वारण्यिका कल्यव्यपदेशेनानीतं विषं पीत्वा प्राणसंशये वर्तत इत्येवं मया निवेदितम् । तत्परित्रायतां भट्टिनी । ( स्वती पादयोः पतति । ) ( ण हु अहं पिअदसणाउत्तन्तं जाणामि । एसा क्खु आरण्णिआ कल्लव्वदेसेण आणीदं विसं पाऊअ पाणसंसए वट्टदि त्ति एव्वं मए णिवेदिदं । ता परित्ताअदु भट्टिणी । )

**वासवदत्ता**—( स्वगतम् । ) हा धिक् हा धिक् । प्रियदर्शनादुःखमपि मेऽन्तरितमारण्यिकावृत्तान्तेन । अतिदुर्जनः खलु लोकः । कदाचिन्मामन्यथा संभावयिष्यति । तदेतदत्र युक्तम् । ( प्रकाशं ससंभ्रमम् । ) मनोरमे लघ्विहैवानय ताम् । नागलोकाद्गृहीतविषविद्य आर्यपुत्रोऽत्र कुशलः । ( हद्धि हद्धि । पिअदंसणादुक्खं वि मे अन्तरिदं आरण्णिआउत्तन्तेण । अदिदुज्जणो क्खु लोओ । कदाइ मं अण्णहा संभावइस्सदि । ता एदं एत्थ जुत्तं । मणोरमे लहु इह एव्व आणेहि तं । णाअलोआदो गहिदविसविज्जो अज्जउत्तो एत्थ कुसलो । )

( निष्क्रान्ता मनोरमा । ततः प्रविशति मनोरमया धृता विषवेगमात्मानं नाटयन्त्यारण्यिका । )

**आरण्यिका**—हला मनोरमे कस्मादिदानीं मामन्धकारं प्रवेशयसि । ( हला मणोरमे कीस दाणिं मं अन्धआरं पवेसेसि । )

**मनोरमा**—( सविषादम् । ) हा धिक् हा धिक् । दृष्टिरप्यस्याः संक्रान्ता विषेणैव । ( वासवदत्तां दृष्ट्वा । ) भट्टिनि लघु परित्रायस्व लघु

प्रियदर्शना प्रियदर्शिका । मनोरमावाक्ये सा तपस्विनी इत्यत्र सेत्यनेन कञ्चुकिप्रोक्ता राजकन्यैव परामृष्टा इति मन्यमानाया उक्तिरियम् । कल्यव्यपदेशेन कल्यं प्रातराशः तस्य व्यपदेशेन मिषेण यद्वा कल्या इति संस्कृतं तत्र कल्या मद्यम् । कल्यं प्रभाते क्लीबं स्यात्... । उपायवचनेऽपि स्यान्त्रिषु मद्ये तु योषिति । इति मेदिनी । अन्यथा संभावयिष्यति अनयैव तस्यै विषं दत्तमिति तर्कयेत् ।

१ नत, २ ततः प्रविशति म०, ३ प्सा. ४ एतस्माल्लि काञ्चित्. ५ धृष्टिदेशे आक्रान्त ( दिट्ठिदेसे अक्कन्त- )

परित्रायस्व । गुरूभूतमस्या विषम् । ( हद्धि हद्धि । दिट्ठि वि से संकन्ता विसवेएण । भट्टिणि लहु परित्ताएहि लहु परित्ताएहि । गुरुईभूदं से विसं । )

वासवदत्ता—( ससंभ्रमं राजानं हस्ते गृहीत्वा । ) आर्यपुत्र उत्तिष्ठोत्तिष्ठ । लघु विपद्यते खल्वेषा तपस्विनी । ( सर्वे पश्यन्ति । ) ( अज्जउत्त उट्ठेहि उट्ठेहि । लहु विवज्जइ क्खु एसा तवस्सिणी । )

कञ्चुकी—( विलोक्य । ) सुसदृशी खल्वियं मम राजपुत्र्याः प्रियदर्शनायाः । ( वासवदत्तां निर्दिश्य । ) राजपुत्रि कुत इयं कन्यका ।

वासवदत्ता—आर्य विन्ध्यकेतोर्दुहिता । तं व्यापाद्य विजयसेनेनानीता । ( अज्ज विंझकेदुणो दुहिदा । तं वावादिअ विजयसेणेण आणीदा । )

कञ्चुकी—कुतस्तस्य दुहिता । सैवेयं मम राजपुत्री । हा हतोऽस्मि मन्दभाग्यः । ( इति निपत्य भूमावुत्थाय । ) राजपुत्रि इयं सा प्रियदर्शिका भगिनी ते ।

वासवदत्ता—आर्यपुत्र परित्रायस्व परित्रायस्व । मम भगिनी विपद्यते । ( अज्जउत्त परित्ताएहि परित्ताएहि । मम भइणी विवज्जइ । )

राजा—समाश्वसिहि समाश्वसिहि । पश्याम्यस्तावत् । कष्टं भोः कष्टम् ।

संजातसान्द्रमकरन्दरसां क्रमेण
पातुं गतश्च कलिकां कमलस्य भृङ्गः ।
दग्धा निपत्य सहसैव हिमेन चासौ
वामे विधौ न हि फलन्त्यभिवाञ्छितानि ॥ ८ ॥

मनोरमे पृच्छ्यतां तावत्किं ते बोध इति ।

मनोरमा—सखि किं ते बोधः । ( गाढं पुनरालपन्ती । ) सखि ननु भणामि किं ते बोध इति । ( सहि किं दे बोधो । सहि ण भणामि किं दे बोधो त्ति । )

प्रियदर्शिका—( अविस्पष्टम् । ) यदेतदवस्थयापि मया न महाराजो दृष्टः । ( इत्यर्धोक्ते भूमौ पतति । ) ( जं एदं अवत्थाए गदाए वि मए ण महाराओ दिट्ठो—

गुरूभूतमत्यन्तम् । संजातेति । क्रमेण प्रवर्धमानोऽत्र भवनक्रमेण च । भृङ्गः संजातः सान्द्रः निबिडः मकरन्दरसो यस्यास्तां कमलस्य कलिकां पातुं गतश्च हिमेन तुषारेण सहसैव निपत्य असौ कलिका दग्धा च । हि यतः विधौ दैवे वामे प्रतिकूले सति अभिवाञ्छितानि न फलन्ति सिध्यन्ति हि निश्चयेन [illegible]

१ भ्रमरो २ गतश्च हि ( सन्दि- ) न पर ।

**राजा**—( सास्रम् । )

एषा मीलयतीदमीक्षणयुगं जाता ममान्धा दिशः
कण्ठोऽस्याः प्रतिरुध्यते मम गिरो निर्यान्ति कृच्छ्रादिमाः ।
एतस्याः श्वसितं हृतं मम तनुर्निश्चेष्टतामागता
मन्येऽस्या विषवेग एव हि परं सर्वं [illegible] दुःखं मम ॥ ९ ॥

**वासवदत्ता**—( सास्रम् ) प्रियदर्शने उत्तिष्ठोत्तिष्ठ । पश्यैष महाराजस्तिष्ठति । कथं वेदनाप्यस्या नष्टा । किमिदानीं मयापराद्धमजानत्या येन कुपिता नोल्लपसि । तत्प्रसीद प्रसीद । उत्तिष्ठोत्तिष्ठ । न खलु पुनरपराल्स्यामि । ( कर्णमवलोक्य । ) हा दैवहतक । किमिदानीं मयापकृतं येनैतदवस्थां गता मे भगिन्यौपदर्शिता । ( प्रियदर्शिकाया उपरि पतति । ) (पिअदंसणे उट्ठेहि उट्ठेहि । पेक्ख एसो महाराओ चिट्ठइ । कहं वेअणा वि से णट्ठा । [illegible] दाणिं मए अवरद्धं अआणन्तीए जेण कुविदा णालवसि । ता पसीद पसीद । उट्ठेहि उट्ठेहि । ण हु पुणो अवरज्झिस्सं । हा देव्वहदअ किं दाणिं मए अवकिदं जेण एदावत्थं गदा मे भइणी आदंसिदा । )

**विदूषकः**—भो वयस्य कथं त्वं मूढ इव तिष्ठसि । नैष विषादस्य कालः । विषमा खलु गतिर्विषस्य । तद्दर्शयात्मनो विद्याप्रभावम् । ( भो वअस्स कहं तुमं मूढोविअ चिट्ठसि । ण एसो विसादस्स कालो । विसमा क्खु गई विसस्स । ता दंसेहि अप्पणो विज्जापहावं । )

**राजा**—सत्यमेवैतत् । ( प्रियदर्शिकामालोक्य । ) मूढ एवाहमेतावतीं वेलाम् । तदहमेनां जीवयामि । सलिलं सलिलम् ।

**विदूषकः**—( निष्क्रम्य पुनः प्रविश्य । ) भोः एतत्सलिलम् । ( भो । एदं सलिलम् । )

( राजोपसृत्य प्रियदर्शिकाया उपरि हस्तं निधाय मन्त्रस्मरणं नाटयति । प्रियदर्शिका शनैरुत्तिष्ठति । )

**वासवदत्ता**—आर्यपुत्र दिष्ट्या प्रत्युज्जीविता मे भगिनी । ( अज्जउत्त दिट्ठिआ पच्चुज्जीविदा मे भइणी । )

---

वसन्ततिलकं वृत्तम् ॥ ८ ॥ एषेति । एषा प्रियदर्शिका विषवशात्स्या ईक्षणयुगं मीलयति । दिशो मम अन्धा जाता । अस्याः कण्ठः प्रतिरुध्यते अतो निरुध्यते इमा मम गिरः शब्दाः कृच्छ्रान्निर्यान्ति । एतस्याः श्वसितं हृतं मम तनुर्निश्चेष्टता निर्व्यापारतामागता । अतः अस्या विषवेग एव मन्ये परं सर्वं नु दुःखं विषवेगजा पीडा मम । अप्रकृतिप्रशंसालंकारः । शार्दूल० वृत्तम् ॥ ९ ॥

---

१ हत. २ गर्व. ३ मां ( म ) आत्म० ४ स्पन्द०. ५ भगिनी प्रियदर्शना.

**विजयसेनः**—अहो देवस्य विद्याप्रभावः ।

**कञ्चुकी**—अहो सर्वत्राप्रतिहता नरेन्द्रता देवस्य ।

**प्रियदर्शिका**—( शनैरुत्थायोपविश्य च जृम्भिकां नाटयन्ती सविषादमविस्पष्टम् । ) मनोरमे चिरं खलु सुप्तास्मि । ( मणोरमे चिरं खु सुत्तह्मि । )

**विदूषकः**—भो वयस्य निर्व्यूढं ते वैद्यत्वम् । ( भो वअस्स णिव्वूढं दे वेदित्तणं । )

( प्रियदर्शिका साभिलाषं राजानं निरूप्य सलज्जं किंचिदधोमुखी तिष्ठति । )

**वासवदत्ता**—( सहर्षम् ) आर्यपुत्र किमिदानीमप्येषान्यथैव करोति । ( अज्जउत्त । किं दाणिं वि एसा अण्णहेव्व करेदि । )

**राजा**—( सस्मितम् । )

> स्वभावस्था दृष्टिर्न भवति गिरो नातिविशदा-
> स्तनुः सीदत्येषा प्रकटपुलकस्वेदकणिका ।
> यथा चायं कम्पः स्तनभरपरिक्लेशजनन-
> स्तथा बाधाप्यस्याः प्रियतमखिलं शाम्यति विषम् ॥१०॥

**कञ्चुकी**—( प्रियदर्शिकां निर्दिश्य । ) राजपुत्रि एष ते पितुराज्ञाकरः । ( इति पादयोः पतति । )

**प्रियदर्शिका**—( विलोक्य । ) कथं कञ्चुक्यार्यविनयवसुः । ( सास्रम् । ) हा तात । हा मातः । ( कहं कञ्चुई अज्जविणअवसू । हा ताद । हा अज्जुए । )

**कञ्चुकी**—राजपुत्रि अलं रुदितेन । कुशलिनौ ते पितरौ । वत्सराजप्रभावात्पुनस्तदवस्थमेव राज्यम् ।

**वासवदत्ता**—( साम्रम् । ) एह्यलीकशीले । इदानीमपि तावद्भगिनीस्नेहं दर्शय । ( कण्ठे गृहीत्वा । ) इदानीं समाश्वसितास्मि । ( एहि अलिअसीले । दाणिं वि दाव बहिणिआसिणेहं दंसेहि । दाणिं समस्सत्थम्हि । )

---

वेदना चेतना । मूढः कर्तव्यतानभिज्ञः । नरेन्द्रत्वं प्रभुत्वं विषवैद्यता च । नरेन्द्रो वार्तिके राज्ञि विषवैद्ये च कथ्यते । इति विश्वः । स्वभावस्थेति–अस्या दृष्टिः स्वभावे प्रकृतौ तिष्ठतीति स्वभावस्था न भवति । गिरो वाचो नाति विशदाः परिस्फुटाः । प्रकटाः स्फुटं दृश्यमानाः पुलका रोमाञ्चाः स्वेदकणिकाश्च यस्यास्तथोक्ता एषा तनुः सीदति ग्लायति । यथा च अस्याः स्तनभरस्य परिक्लेशः पीडा तस्य जननः कारकः कम्पस्तथा । *अथापि अस्याः अखिलं विषं नियतं न शाम्यति ।* अस्या विरबाधायापि गात्रकम्पेन नापनीतेत्यर्थः । शिखरिणी वृत्तम् ॥ १० ॥ समाश्वसितास्मि मनः-

---

१ णिव्वूढं दे मन्तवादित्तणं ( निर्व्यूढं ते मन्त्रवादित्वं ). २ विसं अण्णत्थ करेदि ( विषम–न्यथा करोति ). ३ *गिरा नातिविशदाः.* ४ *करः प्रणमति.* ५ अज्जुके.

**विदूषकः**—भवति त्वं भगिनीं गृहीत्वा कण्ठ एवं परितुष्टासि। वैद्यस्य पारितोषिकं विस्मृतम्। ( होदि तुमं भइणिं गेह्णिअ कण्ठे एव्वं परितुट्ठासि। वेज्जस्स पारिदोसिअं विसुमरिदं। )

**वासवदत्ता**—वसन्तक न विस्मृतम्। ( वसन्तअ ण विसुमरिदं। )

**विदूषकः**—( राजानं निर्दिश्य सस्मितम्। ) वैद्य प्रसारय हस्तम्। भगिन्या अग्रहस्तं ते पारितोषिकं दापयिष्यामि। ( वेज्ज पसारेहि हत्थं। भइणीए अग्गहत्थं दे पारिदोसिअं दाविस्सं। )

( राजा हस्तं प्रसारयति। )

( वासवदत्ता प्रियदर्शिनाहस्तमर्पयति। )

**राजा**—( हस्तमुपसहृत्य। ) किमनया। संप्रत्येव कथमपि प्रसादितासि।

**वासवदत्ता**—कस्त्वमग्रहीतुम्। प्रथममेव तातेनेयं दत्ता। ( को तुमं अगण्हिदुं। पुढमं एव्व तादेण इअं दिण्णा। )

**विदूषकः**—भो माननीया खलु देवी। मास्या. प्रतिकूलं कुरु। ( भो माणणीआ क्खु देवी। मा से पडिऊलं करेहि। )

( वासवदत्ता राज्ञो हस्तं बलादाकृष्य प्रियदर्शिकामर्पयति। )

**राजा**—( सस्मितम्। ) देवी प्रभवति। कुतोऽस्माकमन्यथा कर्तुं विभवः।

**वासवदत्ता**—आर्यपुत्र अतोऽपि परं किं ते प्रियं क्रियताम्। ( अज्जउत्त अदो वि परं किं दे पिअं करीअदु। )

**राजा**—किमतःपरं प्रियम्। पश्य।

> निःशेषं दृढवर्मणा पुनरपि स्वे राज्यमध्यासितं
> त्वं कोपेन सुदूरमप्यपहृता सद्यः प्रसन्ना मम।
> जीवन्ती प्रियदर्शना च भगिनी भूयस्त्वया सङ्गता
> किं तत्स्यादपरं प्रियं प्रियतमे यत्सांप्रतं प्रार्थ्यते॥ ११॥

---

स्वास्थ्य ऽभ्भिनास्मि। विभवः सामर्थ्यम्। निःशेषमिति। दृढवर्मणा पुनरपि निःशेषं स्वराज्यमध्यासितमधिष्ठितम्। कोपेन सुदूरमपहृता त्वमपि सद्यो मम प्रसन्ना। प्रियदर्शना भगिनी जीवन्ती सती त्वया भूयः पुनरपि सङ्गता। अत हे प्रियतमे किं

---

१ वैद्यस्य २ परिहृत्य. ३ न स्यात्.

# TRANSLATION.

## ACT I.

I May Gaurî be propitious unto you; she, who at her marriage rite had her sight troubled by the smoke (of the nuptial fire), but again whose eyes were gladdened by the rays of the moon (on Śiva's head); who looking with longing at the bride-groom, had again her face hung down through Brahma's shame; who was full of jealousy at (when she beheld) Hara, reflected into the mirror of the moon-like nails of her feet, bearing Gangâ; and whose hair stood on end at his touch (as he seized her hand)!

Moreover, may Śiva, who-though angry as the mount Kailasa, being upheaved, quaked, when the *ganas* had their amazment rising, when Kumârâ (Ka'rtikeya) was *lurking under the lap of his mother, when the* serpent (on the body of Śiva) was looking about with rage, and when the ten-headed one (Ra'vana) with his body groaning under the firm planting of his foot (to press down the mountain) was sinking to the depth of *Pâtâla*—was yet delighted at being closely embraced through fear by Umâ, protect us !!

*(At the end of the Benediction)*

STAGE-MANAGER—(*After walking round*) To-day, at the spring-festival, I being very respectfully called, have been thus addressed by the multitude of kings, dependent on the lotus feet of the illustrious king Sriharsha, and here arrived from the regions in different directions—"We have heard it, coming from ear to ear, that our master, Śri Harshadeva, has composed a Nâtikà, Priyadarśikâ by name, graced with a novel arrangement of plot. But we have not seen it staged. Out of great deference, therefore, to that very king, the delighter of the hearts of all people, and with a disposition on your part to favour us, you should represent the same with proper

performance[1]. I will, therefore, in the first place arrange the costumes ( or the tiring room ) and then do as desired. (*Looking around*) I am quite convinced that the minds of the spectators have been won over (or favourably disposed ). For,

Śrī Harsha is a skilled poet; and this assembly too is appreciative of merits; the story of king Vatsarája is attractive ( popular ) in the world; and we, on our part, are expert in acting : each one of these circumstances is, by itself, the source of the attainment of the desired object; how much more so must then be this combination of all excellences that has come about through the greatness ( *lit.* increase ) of my good luck !

(*Looking towards the tiring room*).

Ah, how now ! When I was just about to begin the prologue, my brother, having known my intention, has assumed the part of the chamberlain of Drdhavarman, king of Angas, and is coming hitherwards. I will also then put on the costume of the character to enter next. [ *Exit* ].

*End of the* INDUCTION.

## ACT I.

( *Enter the* Chamberlain )

CHAMB :—( *Jesticulating fatigue accompanied by sorrow, and sighing* )

Alas ! Oh, pity !

The king's misfortune; grief caused by separation from my kinsfolk; exile from the country; and the fatigue of a difficult journey—thus is tasted by me this fruit of my longevity of life, that has been bitter and fruitless. (4).

( *With sorrow and amazement* ). That such a disaster should have been brought over even such a one as king Drdhavarman, whose three regal powers were unobstructed, and who was a peer of Raghu, Dilīpa and

Nala, with a sudden attack, by the cursed king of the Kalingas, who had cherished a feeling of resentment at the thought that he had betrothed (promised) his daughter to Vatsarâja, although solicited for himself by him, and who found an opportunity (*lit.* a weak point) in that king Vatsa did not return till then from captivilty —this, to tell the truth—I do not believe though it has come to pass. How is it that fate has been exceedingly cruel and thus disposed (adverse) towards us! For, that princess I bore away from the tumult of the assault of that sort and terrible like the destruction time of the world and placed in the house of the forest-king, Vindhyaketu, connected with a friendly bond with king Drdhavarman, thinking that I might some how take her to king Vatsa and thereby free my master from his obligation (*lit.* debt of promise). But when I had gone to Agastya's holy pool to bathe, as it was not far off, some people fell upon Vindhyaketu in an instant, slew him, and depopulating the place like demons, burnt it; and it is not known in what plight the princess too now is. The whole place was carefully searched by me; but I did not find out whether she was carried off by those marauders or burnt by them. So what am I, luckless one, to do! (*Reflecting*) Ah! I have heard that Vatsarâja has escaped from imprisonment and returned to Kauśambî, carrying off with him Pradoyata's daughter. What! shall I go just there then? (*Sighing and observing his own condition.*) But what sort of thing shall I say, going there without the princess? Ah! Vindhyaketu had said to me to-day —"Don't you fear. His honour, the great king Drdhavarmâ, is alive; and is in captivity greatly disabled by severe wounds. I will, therefore, go to my master and make the remaining part of my life blissful (*lit.* fruitful) by serving his feet. (*Going about and looking up*). Oh the extreme rigour of the autumnal sun! since it is found to be extremely severe even by me heated as I am by many afflictions.

This sun that is freed from the screen (*lit.* bond) of clouds and has reached Libra after occupying Virgo, is

indeed, blazing fiercely, having regained his effulgence, so Vatsarája, freed from close imprisonment is shining pre-eminently, having attained eminence after securing the princess and regained his own abode (*i. e.* capital or power). (5) (*Exit*)

End of the Vishkambhaka.

---

(*Enter the* KING and VIDÛSHAKA)

KING—The constancy (*lit.* the being unaffected) of my servants was known, the talent of ministers was witnessed, even friends were observed (as regards their sincerity), the affection (loyalty) of the townsmen was realised all the more, the passion for adventures in battle was quite satisfied, and the jewel of women was obtained what, indeed, have I not obtained from captivity, as from piety practised without hypocrisy (sincerely)? (6)

VIDU.—(*With displeasure*) O friend, how do you praise that whore's son, cursed Captivity! And that is forgotten now, *viz*—How you, like a newly captured lordly elephant, with feet (steps) stumbling on account of the shackles of clanking iron chains, with the burning of the heart indicated by the pale lotus like face (the dry tip of the trunk), with eyes up-raised and steady owing to the force of rage, and with the path along the ground cleared with the huge hands (torn up with the huge trunk), did not get the comfort of sleep even during the nights.

KING—Vasantaka, you are, indeed, a wicked man. Mark—

You saw the prison gloomy with darkness but not the splendour of her moon-like face, you felt pain at the clank of the chains, but heard not her sweet accents the cruel prison guards are present to your mind to-day and not her loving side glances you behold the faults of confinement but not the merits of Pradyota's daughter. (7)

VIDU.—(*With an air of pride*) If at all confinement brings in its train happiness, why do you then fasten

your wrath upon the Kalinga-King for having taken Drdhavarman a captive?

KING—(*Smiling;*) Fie upon you, fool! Every one is not Vatsarája who can escape in this way from prison taking a Vásavadattá with him. So let this matter (*lit*-topic) be dropped. It is many days since Vijayasena was sent against Vindhyaketu. And no one has come (brought tidings,) from him till now. Let therefore, the minister Rumanwan be called at once. I wish to say something to him.

(Having entered—)

The Portress—Victory, victory, to Your Majesty! Here are arrived at the door-region Vijayasena and the minister, Rumaṇvat.

KING—Quickly usher them in.

POR.—As Your Majesty commands!

[*Enter* RUMANVAT and VIJAYASENA.]

Ruma.—(*Musing.*)

Although gone out the very moment, servants generally enter a royal palace, full of apprehension, as if they were guilty, even though without guilt. (8)

(*Approaching*) Prosperity to Sire?

KING—(*Pointing to a seat*) Rumaṇvat, be seated here.

RUMAN.—(*Sitting down, with a smile*). Here is Vijayasena, the conqueror of Vindhyaketu, bowing (to you).

VIJA.—(*does accordingly.*)

KING.—(*Embracing him graciously.*) Is Your Honour well?

VIJA.—(I am) to-day by Sire's favour.

KING—Vijayasena, please be seated (VIJAYA. *sits down*).

KING—Vijayasena, tell Vindhyaketu's acount.

VIJA—Sire, what more can I tell? It is as it should be when Sire is angry.

KING—Still I wish to hear it in detail.

VIJA.—May Your Majesty hear-Starting from here according to Your Majesty's order, with an army of elephants, cavalry and infantry, as directed, we traversed the road though long in three days, and unexpectedly fell upon Vindyaketu at the time of day-break

KING —Then, then ?

VIJA —Then roused by hearing the tumultuous din of our forces, he, *Vindhyaketu, too, rushed out* like a lion from a cave of the Vindhya mountain and without *waiting for (the mustering of) his army and conveyances* and having a few followers that happened to be at hand, *proceeded at once to engage us, proclaiming his* name

KING—( *Looking at* RUMANVAT *with a smile* ) That was creditably done by Vindhyaketu What then ?

VIJA.—Then when his companions were *killed* to a man in a fierce onslaught by us, whose envy and energy were doubled at *the thought—'Here is he,'* he, with the fury of his anger and strength enhanced by the crushing blow, fought in a still fiercer manner

KING—Bravo, Vindhyaketu ! Excellent, excellent !

VIJAYA—What description can be given, Sire ! I will tell in brief—

Having first of all, himself fighting on foot, crushed the foot-soldiers by merely striking them hard with his chest, and dispersed the terrified cavalry like a herd of deer in the quarters with volleys of arrows from afar, he discharged on all sides the whole stock of his weapons and then quickly unsheathing his sword, proceeded to enjoy the sport of cutting off the plantain grove of the mass of elephants' trunks (9).

Making havoc, single-handed, in this way in our three-*fold army*, with his towering shoulders covered with the rays of his sword, Vindhyaketu, with his broad chest *shattered by hundreds of weapons, and exhausted after* a long time, was slain in the battle (10)

*KING*—Rumanvan, to tell the truth we are quite put to shame by the death of Vindhyaketu, following the path proper for worthy ( *i e* brave ) persons

